एउटा काग छ । ऊ तिर्खाएको छ । यता हेर्छ, पानी छैन । उता हेर्छ, पानी छैन । ऊ कहीँ पनि पानी देख्दैन । ऊ पानीका लागि घुम्छ । काग टाढासम्म पुग्छ । त्यहाँ उसले एउटा घैँटो देख्छ । कागलाई अत्यन्त सन्तोष हुन्छ । तर घैँटोमा थोरै मात्र पानी हुन्छ । ऊ 'पानी कसरी पिऊँ ?' भनेर सोच्छ । उसले एउटा उपाय गर्छ । ढुङ्गाका टुक्राहरू ल्याउँछ । ढुङ्गाका टुक्रा हालेर घैँटो भर्छ । पानी माथि आउँछ । काग आनन्दले पानी पिउँछ ।

## ८. सारिण्याः सहयोगेन सङ्ख्यानाम लिखत *(तालिकाको सहयोगले सङ्ख्याको नाम लेख्नुहोस्)*

| | | |
|---|---|---|
| २० | 20 | विंशतिः |
| २१ | 21 | एकविंशतिः |
| २२ | 22 | द्वाविंशतिः |
| २३ | 23 | त्रयोविंशतिः |
| २४ | 24 | चतुर्विंशतिः |
| २५ | 25 | पञ्चविंशतिः |
| २६ | 26 | षड्विंशतिः |
| २७ | 27 | सप्तविंशतिः |
| २८ | 28 | अष्टाविंशतिः |
| २९ | 29 | ऊनत्रिंशत् |
| ३० | 30 | त्रिंशत् |

२० = विंशतिः  २९ = --------------------  ३० = --------------------

२२ = --------------------  २७ = --------------------  २४ = --------------------

९. रिक्तस्थाने अङ्कान् लिखत *(अङ्क लेखेर खाली ठाउँ भर्नुहोस्)*

द्वाविंशतिः --------------------

चतुर्विंशतिः --------------------

पञ्चविंशतिः --------------------

ऊनत्रिंशत् --------------------

त्रिंशत् --------------------

१०. त्रिशतः चत्वारिंशत्पर्यन्तान् सङ्ख्यावाचकशब्दान् क्रमेण लिखत *('त्रिंशत्' देखि 'चत्वारिशत्' सम्मका सङ्ख्यावाचक शब्दहरू क्रमैले लेख्नुहोस्)*

-------------------- -------------------- --------------------

-------------------- -------------------- --------------------

-------------------- -------------------- --------------------

-------------------- --------------------

| | | |
|---|---|---|
| पाठशाला - विद्यालय, School | त्रिंशत् = तिस, Thirty | रम्या = राम्रो (स्त्री.), Beautiful |
| ग्रामे = गाउँमा, In the village | पञ्चाशत् = पचास, Fifty | शान्ता = शान्त (स्त्री.), Peaceful |
| तव = तिम्रो, Your | मृदु = मधुर, Mild | विशाला = ठुलो (स्त्री.), Great |
| विंशतिः = बिस, Twenty | शिक्षितः = शिक्षा आर्जन गरेको, Educated | दीक्षिताः = दीक्षा लिएका, Consecrated |

# मम दिनचर्या

## षष्ठः पाठः

## सुप्रभातम्

१. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



सुप्रभातम् सखे ! सुप्रभातम् ।
कुक्कुटः वासते सुप्रभातम् !

सूर्यः उदितः सुप्रभातम्
अन्धकारः गतः सुप्रभातम्
सुप्रभातम् सुनो ! सुप्रभातम्
शीघ्रमुत्तिष्ठ भोः ! सुप्रभातम् ॥



गायति वत्सः सुप्रभातम्
चटकः कूजति सुप्रभातम् ।
सुप्रभातम् पितः ! सुप्रभातम्
चायम् कथयति सुप्रभातम् ॥

पुस्तकम् भाषते सुप्रभातम्
निगदति लेखनी सुप्रभातम्
सुप्रभातम् गुरो ! सुप्रभातम्
व्याहरामः वयम् सुप्रभातम् ॥

शुभ प्रभात साथी, शुभ प्रभात !
कुखुरो बास्तै भन्छ शुभ प्रभात !
बिहान सूर्य उदाउँछ । बिहानै अन्धकार भाग्छ । छोरा, बिहान भयो । लौ छिटो उठ, बिहान भयो । बाच्छो बिहान भयो भन्दै कराउँछ । भँगेरो पनि बिहानै चिरबिर गर्छ । बुबा शुभ प्रभात ! चियाले पनि भन्छ, "शुभ प्रभात !" पुस्तकले भन्छ, "शुभ प्रभात !" कलमले भन्छ, "शुभ प्रभात ! शुभ प्रभात गुरु, शुभ प्रभात !" हामी सबै भन्छौं, "शुभ प्रभात !"

२. चित्रम् विलोक्य कोष्ठस्थशब्दानाम् सहयोगेन च रिक्तस्थानम् पूरयत *(चित्र हेर्नुहोस् र उपयुक्त शब्द राखी खाली ठाउँ भर्नुहोस्)*



गृहस्य प्राङ्गणम् ------------ (स्वच्छम्, मधुरम्) नास्ति ।

वयम् प्रभाते प्राङ्गणस्य स्वच्छीकरणम् ------------ (करोति, कुर्मः) ।

मातुः हस्ते ------------ (मार्जनी, सङ्करः) अस्ति ।

पिता ------------ (सङ्करम्, मार्जनीम्) एकत्र करोति ।

अहम्, भगिनी च सङ्करम् ------------ (सङ्करधान्याम्, प्राङ्गणे) क्षिपावः ।

घरको आँगन सफा छैन । हामी बिहान आँगनको सरसफाइ गर्छौं । आमाको हातमा कुचो छ । बुबा फोहोर जम्मा गर्नुहुन्छ । फोहोर फाल्ने भाँडामा म र बहिनी फोहोर फाल्छौं ।

३. शुद्धम् उच्चारयत *(शुद्ध उच्चारण गर्नुहोस्)*



सम्मार्जनी



सङ्करधानी



प्रोञ्छनी


स्वच्छीकरणम्


गृहप्राङ्गणम्


पात्रक्षालनम्

## ४. प्रदत्तैः अक्षरैः जायमानम् शब्दम् रिक्तस्थाने लिखत *(तलका अक्षरहरूबाट बन्ने शब्द खाली ठाउँमा लेख्नुहोस्)*

(क)




बालकः

(ख)




------------

(ग)




------------

(घ)




------------

(ङ)




------------

(च)




------------

(छ)




------------

(ज)




------------

## ५. कोष्ठकात् समुचितम् शब्दम् विचित्य चित्रस्य अधः लिखत *(सुहाउँदो शब्द छानी चित्रको तल लेख्नुहोस्)*

| स्नानम्, प्रक्षालयनम्, केशकर्तनम्, नखकर्तनम्, दन्तधावनम्, सम्मार्जनम् |
|---|



(क) .............



(ख) .............



(ग) .............

  

(घ) ............ (ङ) ............ (च) ............

## ६. मित्राणि कथाम् श्रावयत *(साथीहरूलाई कथा सुनाउनुहोस्)*

एकस्मिन् ग्रामे एकः कृषकः आसीत् । तस्य एका कुक्कुटी आसीत् । सा प्रतिदिनम् एकम् सुवर्णमयम् अण्डम् ददाति स्म । कृषकः अण्डम् आपणे विक्रीणीते स्म । प्राप्तैः रूप्यकैः सः गृहे आवश्यकानि वस्त्राणि, खाद्यानि च क्रीणाति स्म ।

बहुकालपर्यन्तम् कृषकः सुखी आसीत् । किन्तु एकस्मिन् दिवसे सः विचारितवान्, "मम कुक्कुटी प्रतिदिनम् एकम् एव अण्डम् किमर्थम् ददाति ? तस्याः उदरे बहूनि अण्डानि सन्ति । अहम् तानि सर्वाणि आदाय विक्रीणे । एकस्मिन् एव काले बहूनि रूप्यकाणि च अर्जयामि ।"



सः स्वस्य पत्न्यै स्वस्य विचारम् उक्तवान् । सा अपि तस्य वचनम् स्वीचकार । ततः कृषकः कर्तन्या कुक्कुट्याः उदरम् कर्तितवान् । कुक्कुट्याः उदरे एकम् अपि अण्डम् नासीत् । केवलम् मलम्, रक्तम् च आसीत् । कुक्कुटी अपि मृतवती ।

कृषकः स्वस्य मूर्खत्वम् अनुभूय पश्चात्तापम् अकरोत् । सः उच्चैः रुरोद ।

कुनै गाउँमा एउटा किसान थियो । उसको एउटा पोथी कुखुरो थियो । पोथीले दिनदिनै एउटा सुनको अन्डा दिन्थ्यो । किसान त्यो अन्डा बजारमा लगेर बेच्ने गर्थ्यो । त्यसबाट आएको पैसाले ऊ घरका लागि चाहिने कपडा, अन्न आदि किन्थ्यो ।

यसरी लामो समय किसानको जीवन सुखसँग बितिरहेको थियो । एक दिन किसानले विचार गऱ्यो, "यस पोथीले दिनको एउटा मात्र अन्डा किन दिन्छ ? पक्कै यसको पेटमा धेरै अन्डा हुनुपर्छ । म त्यो सबै अन्डा निकालेर बेच्छु र धेरै पैसा कमाउँछु ।"

उसले यो कुरा आफ्नी श्रीमतीलाई पनि सुनायो । श्रीमतीले पनि उसको कुरा मानी । त्यसपछि किसानले चक्कुले कुखुराको पेट चिऱ्यो । पेटमा एउटा पनि अन्डा थिएन । सुली र अलिअलि रगत मात्र थियो । कुखुरो पनि मऱ्यो ।

आफ्नो मूर्खतामा किसानले पश्चात्ताप गऱ्यो । ऊ ठुलो स्वरले रुन थाल्यो ।

## ७. अनुच्छेदस्य पठनेन समुचितम् विकल्पम् विचित्य प्रश्नानाम् उत्तरम् लिखत *(अनुच्छेद पढ्नुहोस् र सही विकल्प छानेर प्रश्नको उत्तर लेख्नुहोस्)*

अद्य शनिवासरः अस्ति । शनिवासरे अस्माकम् विद्यालये अवकाशः भवति । अवकाशस्य दिने वयम् स्वच्छतायै कार्याणि कुर्मः ।

माता मम, भगिन्याः, अग्रजस्य च नखानि कर्तयति । नखानि कर्तित्वा वयम् वस्त्राणि प्रक्षालयामः । भ्राता स्वस्य वस्त्राणि स्वयम् एव प्रक्षालयति । अहम् वस्त्राणि प्रक्षालयितुम् न शक्नोमि । अतः माता मम भगिन्याः च वस्त्राणि प्रक्षालयति । अहम् वस्त्राणि शोषयितुम् मातुः सहयोगम् करोमि ।

वस्त्राणि प्रक्षाल्य वयम् स्नानम् कुर्मः । भ्राता अहम् च स्वयम् एव स्नानम् कुर्वः । भगिनीम् तु माता स्नापयति । स्नानात् पश्चात् वयम् सूर्यस्य प्रकाशे वसामः । माता अस्माकम् केशेषु तैलम् सञ्चारयति । शरीरे अपि तैलम् लेपयति । सा 'तैललेपनम् स्वास्थ्यकरम् भवति' इति वदति । तदनन्तरम् वयम् वस्त्राणि धारयामः । माता भगिन्याः केशान् कङ्कतिकया प्रसाधयति ।





दिवा स्वल्पाहारम् कृत्वा वयम् गृहपरिसरस्य सम्मार्जनम् कुर्मः । अस्मिन् कार्ये वयम् सर्वे संलग्नाः भवामः । शनिवासरः स्वच्छतायाः दिवसः अस्ति । वयम् समयस्य सदुपयोगम् कुर्मः ।

(क) शनिवासरे वयम् किम् कुर्मः ?

(अ) आपणम् गच्छामः (आ) स्वच्छतायै कार्याणि कुर्मः

(इ) चलचित्रम् पश्यामः

(ख) वयम् किम् कृत्वा वस्त्राणि प्रक्षालयामः ?

(अ) नखानि कर्तित्वा (आ) स्नानम् कृत्वा (इ) मार्जनम् कृत्वा

(ग) भगिनीम् कः स्नापयति ?

(अ) भ्राता (आ) माता (इ) अनुजः

(घ) किम् स्वास्थ्यकरम् भवति ?

(अ) तैललेपनम् (आ) केशकर्तनम् (इ) वस्त्रधारणम्

(ङ) शनिवासरः कस्य दिवसः ?

(अ) मनोरञ्जनस्य (आ) पठनस्य (इ) स्वच्छतायाः

आज शनिबार हो । शनिबार हाम्रो विद्यालयमा बिदा हुन्छ । बिदाको दिन हामी सरसफाइको काम गर्छौं । आमा मेरो, बहिनी र दाजुको नङ काटिदिनुहुन्छ । नङ काटेर हामी कपडा धुन्छौं । दाजु आफ्ना कपडा आफैँ धुनुहुन्छ । म कपडा धुन सक्दिनँ । त्यसैले आमा मेरो र बहिनीको कपडा धुनुहुन्छ । म कपडा सुकाउन आमालाई सहयोग गर्छु । कपडा धोएर हामी नुहाउँछौं । दाजु र म आफैँ नुहाउँछौं । बहिनीलाई आमाले नुहाइदिनुहुन्छ । नुहाएपछि हामी घाममा बस्छौं । आमा हाम्रो कपालमा तेल लगाइदिनुहुन्छ । शरीरमा पनि तेल लगाइदिनुहुन्छ । उहाँ 'तेल लगाउँदा शरीर स्वस्थ हुन्छ' भन्नुहुन्छ । हामी कपडा लगाउँछौं । आमा काइँयोले बहिनीको कपाल कोरिदिनुहुन्छ । दिउँसो हामी खाजा खान्छौं । खाजा खाएर घर वरिपरि सफा गर्छौं । यस काममा हामी सबै लाग्छौं । शनिबार सरसफाइ गर्ने दिन हो । हामी समयको सदुपयोग गर्छौं ।

८. प्रदत्तानाम् पञ्चानाम् वस्तूनाम् नामानि लिखत *(तल दिइएका पाँचओटा वस्तुको नाम लेख्नुहोस्)*











## ९. उदाहरणम् अनुसृत्य रिक्तस्थानम् पूरयत *(उदाहरण हेरी खाली ठाउँ भर्नुहोस्)*

| | |
|---|---|
| पिता क्षेत्रम् गच्छति । | अहम् क्षेत्रम् गच्छामि । |
| माता पुस्तकम् पठति । | अहम् पुस्तकम् ...... । |
| भगिनी अक्षराणि ....... । | अहम् अक्षराणि लिखामि । |
| भ्राता प्राङ्गणे खेलति । | अहम् प्राङ्गणे ..........। |
| अश्वः शीघ्रम् .......... । | अहम् शीघ्रम् धावामि । |
| अनुजः गीतम् गायति । | अहम् गीतम् ...........। |

## १०. चित्रम् वर्णयत *(चित्रमा के भइरहेको छ ? भन्नुहोस्)*



कुक्कुटः - कुखुरो, Cock
अन्धकारः- अँध्यारो, Darkness
सुनो ! - हे छोरा !, Oh Son !
चायम् - चिया, Tea
निगदति - भन्छ, Says
व्याहरामः - भन्दछौं, We say
प्राङ्गणम् - आँगन, Courtyard
कुक्कुटी - कुखुरी, Hen
सुवर्णमयम् - सुनको, Golden
विक्रीणीते स्म - बेच्दथ्यो, Used to sell
बहुकालम् - धेरै समयसम्म, For a long time
रूप्यकाणि - रुपियाँ, Money
स्वीचकार - मान्यो, Accepted
अवकाशः - छुट्टी, Holiday
स्वच्छीकरणम् - सफाइ, Cleaning
मार्जनी - कुचो, Broom
सङ्करधानी - फोहोर फाल्ने भाँडो, Dustbin
कृषकः - किसान, Farmer
कर्तयति - काटिदिनुहुन्छ, Cuts
स्वच्छतायै - सरसफाइका लागि, For cleaning
प्रक्षालयति - धुन्छ, Washes
शोषयितुम् - सुकाउन, To dry
प्रक्षाल्य - धोएर, After washing
लेपयति - घस्नुहुन्छ, Rubs
तैलम् - तेल, Oil
स्वास्थ्यकरम् - स्वास्थ्यकर, Healthy
गृहपरिसरस्य - घर वरपरको, Around the home
कङ्कतिका - काइँयो, Comb
प्रसाधयति - कोरिदिनुहुन्छ, Combs

# सप्तमः पाठः

# प्रातःकालः

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



सायङ्काले क्रीडा कार्या, प्रातः कार्यः योगः ।
पिब पानीयम् समये समये, दूरम् गच्छति रोगः ॥



कुरुते माता प्राणायामम् नित्यम् प्रातःकाले ।
भ्राता क्रीडति अस्माभिः सह नित्यम् सायङ्काले ।
अनुजा अपि पित्रा सह कुरुते नित्यम् योगाभ्यासम् ।
अहम् तु अलसः एतत्करणे कुर्वे नैव प्रयासम् ॥



स्वस्य शरीरम् स्वस्थम् कर्तुम् व्यायामः करणीयः ।
शत्रुः आलस्यम् सर्वेषाम् उद्योगः आत्मीयः ।
तस्मात् सर्वे योगाभ्यासम् व्यायामम् कुर्वन्तु ।
रोगान् सर्वान् दूरम् कृत्वा स्वस्थशरीराः सन्तु ॥



साँझ खेल्नुपर्छ । बिहान योग गर्नुपर्छ । समय समयमा पानी पिउँदा रोग टाढा भाग्छ । आमा बिहान सधैँ प्राणायाम गर्नुहुन्छ । बेलुकीपख दाजु सधैँ हामीसँग खेल्नुहुन्छ । बहिनी पनि बुबासँग सधैँ योगाभ्यास गर्छिन् । म त अल्छी भएँ । यी काम गर्न जाँगर नै गर्दिनँ । शरीर स्वस्थ राख्न व्यायाम गर्नुपर्छ । अल्छीपन सबैको शत्रु हो । उद्योगचाहिँ आफन्त हो । त्यसैले सबैले योगाभ्यास र व्यायाम गर्नुपर्छ । सबै रोग भगाएर शरीर स्वस्थ राख्नुपर्छ ।

## २. चित्रम् वर्णयत *(चित्रमा के भइरहेको छ ? भन्नुहोस्)*



३. चित्रम् विलोक्या कोष्ठकस्थशब्दैः रिक्तस्थानम् पूरयत *(चित्र हेर्नुहोस् र मिल्ने शब्द छानेर खाली ठाउँ भर्नुहोस्)*





| (क्रीडा, शरीरे, रज्जुक्रीडाम्, कन्दुकेन, विशालम्, नित्यम्) |
| --- |

(क) वयम् ------------ क्रीडास्थले खेलामः ।

(ख) क्रीडास्थलम् ------------ अस्ति ।

(ग) वयम् ------------ खेलामः ।

(घ) भगिनी ------------ क्रीडति ।

(ङ) खेलनेन ------------ स्फूर्तिः भवति ।

(च) स्वस्थतायै ------------ आवश्यकी अस्ति ।

(क) हामी सधैँ खेलमैदानमा खेल्छौँ । (ख) खेलमैदान ठुलो छ । (ग) हामी भकुन्डो खेल्छौँ । (घ) बहिनी डोरीखेल (स्किपिङ) खेल्छिन् । (ङ) खेल्नाले शरीरमा फुर्ती आउँछ । (च) स्वस्थताका लागि खेल आवश्यक हुन्छ ।

## ४. शुद्धम् उच्चार्य अभ्यासपुस्तिकायाम् लिखत *(शुद्ध उच्चारण गर्नुहोस् र कापीमा लेख्नुहोस्)*


स्थलम्


स्वास्थ्यकेन्द्रम्


स्फूर्तिमान्


स्नानीयम्


स्तुतिः


स्कन्धः

## ५. लुप्तम् अक्षरम् योजयित्वा शब्दम् पूरयत *(छुटेको अक्षर थपी शब्द पूरा गर्नुहोस्)*


सम्मा------------नी


शरी------------


क------------कम्


र------------क्रीडा

## ६. चित्रम् विलोक्य योगासनानाम् अभ्यासम् कुरुत *(चित्र हेरी योगासनको अभ्यास गर्नुहोस्)*


सुखासनम्


भुजङ्गासनम्


शवासनम्


पर्वतासनम्


धनुरासनम्


मार्जारासनम्

## ७. द्रुतपठनम् कुरुत *(छिटो छिटो पढ्नुहोस्)*

एकस्मिन् नगरे एकः साधुः वसति स्म । सः अतीव ज्ञानी आसीत् । नगरस्थाः जनाः तस्य समीपे गच्छन्ति स्म । सः तान् दुःखनिवारणस्य उपायान् वदति स्म । तस्मिन् नगरे एकः वणिक् आसीत् । सः प्रतिदिनम् योगिनः समीपे गच्छति स्म । सः नित्यम् योगीनम् एकाम् एव समस्याम् श्रावयति स्म । सः कथयति स्म, "मम आपणे न्यूनः एव व्यापारः भवति । मम पत्नी नित्यम् क्रुध्यति । अस्याः समस्यायाः समाधानम् किम् ?" एतत् श्रुत्वा योगी किञ्चिद् हसति स्म, परम् किमपि न वदति स्म ।

एकस्मिन् दिने योगिनः समीपे बहवः भक्ताः स्थिताः आसन् । सः वणिक् पुनः आगत्य ताम् एव समस्याम् अश्रावयत् । साधुः एकाम् हास्यकथाम् उक्तवान् । सर्वे जनाः अहसन् । साधुः ताम् एव कथाम् पुनः अश्रावयत् । तदा द्वित्राः जनाः अहसन् । तदनन्तरम् साधुः तृतीयवारम् कथाम् श्रावितवान् । अस्मिन् वारे कः अपि न अहसत् । तद् दृष्ट्वा साधुः उक्तवान्, "भवन्तः एकाम् हास्यकथाम् श्रुत्वा वारम् वारम् न हसन्ति चेत्, किमर्थम् एकम् एव दुःखम् स्मृत्वा वारम् वारम् दुःखिताः सन्ति ?" एतत् श्रुत्वा सः वणिक् व्यचारयत्, "चिन्ता समस्यायाः समाधानम् नास्ति" इति ।



एउटा सहरमा एक जना साधु बस्दथे । उनी अत्यन्त ज्ञानी थिए । सहरका सबै मानिसहरू उनको नजिक जान्थे । साधु उनीहरूलाई दुःख हटाउने उपाय बताउँथे । त्यस सहरमा एक जना व्यापारी थियो । ऊ सधैँ आएर साधुलाई एउटै समस्या सुनाउँथ्यो, "पसलमा व्यापार हुँदैन, श्रीमती खाली रिसाउँछे । यसको समाधान के हो ?" यो सुनी योगी थोरै हाँस्थे, तर केही बोल्दैनथे ।

एक दिन साधुको नजिकै धेरै मानिस बसिरहेका थिए । व्यापारी आएर फेरि त्यही समस्या सुनायो । साधुले उनीहरूलाई एउटा चुट्किला सुनाए । मानिस जोडले हाँसे । साधुले त्यही चुट्किला फेरि सुनाए । यस पटक दुई तीन जना मात्र मानिस हाँसे । साधुले फेरि तेस्रो पटक उही चुट्किला सुनाए । यस पटक कोही पनि हाँसेनन् । यो देखेर साधुले भने, "तपाईंहरू एउटै चुट्किला सुनेर पटक पटक हाँस्न सक्नुहुन्न भने एउटै दुःख सम्झेर सधैँ किन रुनुहुन्छ ?" यो सुनेर व्यापारीले विचार गर्‍यो, "चिन्ता समस्याको समाधान होइन ।"

## ८. अनुच्छेदम् पठित्वा प्रश्नानाम् समुचितानि उत्तराणि लिखत *(अनुच्छेद पढी सही उत्तर छानेर लेख्नुहोस्)*

अहम् प्रभाते उत्तिष्ठामि । ततः नित्यकर्माणि करोमि । तत्पश्चात् सर्वे मिलित्वा योगाभ्यासम् कुर्मः । प्रथमम् शरीरम् स्फूर्तम् विधातुम् व्यायामम् कुर्मः । किञ्चित् क्षणम् व्यायामम् कृत्वा योगासनानि कुर्मः ।

पिता योगासनानि शिक्षयति । वयम् तस्य निर्देशनम् श्रुत्वा योगासनम् कुर्मः । वयम् बालकाः स्मः । अतः पिता सरलानि एव आसनानि शिक्षयति । अनुजा आसनम् कर्तुम् न जानाति । अहम् ताम् शिक्षयामि । माता प्राणायामम् शिक्षयति । सा वदति, “योगासनेन प्राणायामेन च अस्माकम् शरीरम् स्वस्थम् भवति ।” अन्ते सर्वे मिलित्वा ध्यानम् कुर्मः । ध्यानेन अस्माकम् चित्ते शान्तिः भवति ।

मम अग्रजः अलसः अस्ति । सः आलस्येन सम्यक् योगाभ्यासम् न करोति । शरीरस्य चित्तस्य च स्वस्थतायै व्यायामः योगाभ्यासः च आवश्यकः भवति ।



(क) केन शरीरम् स्फूर्तम् भवति ?

(अ) व्यायामेन (आ) शयनेन (इ) भोजनेन

(ख) पिता कीदृशानि आसनानि शिक्षयति ?

(अ) सरलानि (आ) कठिनानि (इ) सर्वाणि

(ग) कः आसनम् कर्तुम् न जानाति ?

(अ) अनुजा (आ) अग्रजः (इ) अनुजः

(घ) केन अस्माकम् शरीरम् स्वस्थम् भवति ?

(अ) योगासनेन व्यायामेन च (आ) आलस्येन बहुशयनेन च

(इ) बहुभोजनेन बहुभाषणेन च

(ङ) भ्राता किमर्थम् रुग्णः अस्ति ?

(अ) सः योगाभ्यासे आलस्यम् करोति ।

(आ) सः सम्यक् योगाभ्यासम् करोति ।

(इ) सः नित्यम् व्यायामम् करोति ।

म बिहान उठ्छु । त्यसपछि नित्यकर्म गर्छु । त्यसपछि हामी सबै मिलेर योगाभ्यास गर्छौं । शरीर फुर्तिलो बनाउन पहिले व्यायाम गर्छौं । एकछिन व्यायाम गरेर योगाभ्यासहरू गर्छौं । बुबा योगासनहरू सिकाउनुहुन्छ । हामी सबै जना उहाँको निर्देशन सुनेर योगासन गर्छौं । हामी बालक छौं । त्यसैले बुबा सरल आसनहरू मात्रै सिकाउनुहुन्छ । बहिनी आसन गर्न जान्दिनन् । म उनलाई सिकाउँछु । आमा प्राणायाम गर्न सिकाउनुहुन्छ । उहाँ भन्नुहुन्छ, "योगासन र प्राणायामले हाम्रो शरीर स्वस्थ हुन्छ ।" अन्तिममा सबै जना ध्यान गर्छौं । ध्यान गर्दा मनमा शान्ति हुन्छ ।

मेरा दाजु अल्छी हुनुहुन्छ । उहाँलाई राम्ररी योगाभ्यास गर्न अल्छी लाग्छ । शरीर र मन स्वस्थ राख्न व्यायाम र योगाभ्यास आवश्यक छन् ।

## ९. चित्रे रङ्गम् योजयत *(चित्रमा रङ भर्नुहोस्)*



१०. सारिणीम् पठित्वा रिक्तस्थानम् पूरयत *(तालिका पढी खाली ठाउँ भर्नुहोस्)*

| | | | |
|---|---|---|---|
| अहम् | उत्तिष्ठामि | वयम् | उत्तिष्ठामः |
| | खादामि | | खादामः |
| | पठामि | | पठामः |
| | खेलामि | | खेलामः |
| | धावामि | | धावामः |
| | हसामि | | हसामः |

(क) अहम् प्रभाते उत्तिष्ठामि । वयम् प्रभाते उत्तिष्ठामः ।

(ख) अहम् फलम् ------------ । वयम् फलम् खादामः ।

(ग) अहम् पुस्तकम् पठामि । वयम् पुस्तकम् ------------ ।

(घ) अहम् सायङ्काले ------------ । वयम् सायङ्काले खेलामः ।

(ङ) अहम् शीघ्रम् धावामि । वयम् शीघ्रम् ------------ ।

(च) अहम् ------------ । वयम् हसामः ।

पानीयम् - पानी, Water
पित्रा सह - बुबासित, With father
अलसः - अल्छी, Lazy
प्रयासः - प्रयास, Effort
व्यायामः - कसरत, Exercise
आलस्यम् - अल्छ्याइँ, Laziness
आत्मीयः - आफन्त, Relative
स्वस्थशरीराः - स्वस्थ शरीर भएका, Healthy
क्रीडास्थलम् - खेल मैदान, Play ground
कन्दुकम् - भकुन्डो, Ball
रज्जुक्रीडा - डोरी झट्कारेर खेलिने खेल, Skiping
साधुः - साधु, Saint
वणिक् - व्यापारी, Merchant
हास्यकथा - चुट्किला, Joke
द्वित्राः जना - दुई तीन जना, Two or three men
योगाभ्यासः - योग, Yoga
प्राणायामः - प्राणायाम, Breathing
मिलित्वा - मिलेर, Having combination

## अष्टमः पाठः

# भोजनम्

### १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*





स्वादु स्वादु ओदनः स्वादु व्यञ्जनम् ।
स्निग्ध-हृद्य-भोजनम् कुर्महे वयम् ॥

स्वच्छ-शुद्ध-भोजनम् ताप-हारकम् ।
यातयाम-भोजनम् रोगकारकम् ॥

नेत्रशक्तिवर्धकम् शाकभोजनम् ।
भोजनस्य संयमम् कुर्महे वयम् ॥ स्वादु.... ॥

तुष्टि-पुष्टिकारकम् ग्रास-चर्वणम् ।
उदर-दुःख-दायकम् शीघ्रभोजनम् ॥

भोजनेन जायते, देहरक्षणम् ।
रस्य-स्वल्पभोजनम् कुर्महे वयम् ॥ स्वादु... ॥

हामी मिठो र स्वादिलो भात खान्छौँ । हाम्रो भोजन चिल्लो र रसिलो पनि छ । शुद्ध र स्वच्छ भोजनले दुःख मेटाउँछ । बासी खानेकुराले रोग ल्याउँछ । सागले आँखाको शक्ति बढाउँछ । हामी भोजनमा संयमित हुन्छौँ । राम्ररी चपाएर खाँदा पोष लाग्छ । सन्तोष पनि हुन्छ । हडबड गरेर खाँदा पेट गडबड हुन्छ । भोजनबाट शरीरको रक्षा हुन्छ । हामी रसिलो र ठिक्कको भोजन गर्छौं ।

### २. चित्रम् विलोक्य शब्दार्थम् निगदत *(चित्र हेरी शब्दको अर्थ भन्नुहोस्)*


बदरिका


काजुतकम्


पिस्तकम्


भूमिफली


भूपनसम्


जम्बूफलम्


वृक्षपनसम्


अक्षोटः


सीताफलम्


नारिकेलः

३. चित्रम् विलोक्य कोष्ठकस्य साहाय्येन च रिक्तस्थानम् पूरयत *(चित्र हेरी मिल्ने शब्द भर्नुहोस्)*



| |
|---|
| बहूनि, द्वारम्, गृहम्, वाटिका, कपोताः, प्राङ्गणम्, फुल्लन्ति, फलानि |

इदम् मम ------------ अस्ति । गृहे एकम् ------------ अस्ति, ------------ वातायनानि च सन्ति । गृहस्य अग्रे ------------ अस्ति । प्राङ्गणे ------------ सन्ति । प्राङ्गणस्य समीपे ------------ अस्ति । तत्र पुष्पाणि ------------ । तत्र ------------ अपि फलन्ति ।

| |
|---|
| यो मेरो घर हो । घरमा एउटा ढोका छ, धेरै झ्यालहरू छन् । घरको अगाडि आँगन छ । आँगनमा परेवाहरू छन् । आँगनको नजिकै एउटा बगैंचा छ । त्यहाँ फूलहरू फुल्छन् । त्यहाँ फलहरू पनि फल्छन् । |

४. शिक्षकमुखात् श्रुत्वा अनूच्चारयत *(शिक्षकबाट सुनेर उच्चारण गर्नुहोस्)*



आर्द्रकम्



गन्धवल्लकः



गन्धबीजा



हरिद्रा



लवङ्गम्



तीव्रगन्धा



धान्याकम्



सूक्ष्मपत्रिका



एलिका

५. शब्दौ संयोज्य नवीनशब्दम् निर्मात *(दुईओटा शब्द जोडेर नयाँ शब्द बनाउनुहोस्)*

स्वास्थ्य + कारकम् → स्वास्थ्यकारकम्

कष्ट + कारकम् → -------------------------

रोग + कारकम् → -------------------------

ताप + हारकम् → -------------------------

शक्ति + वर्धकम् → -------------------------

तुष्टि + कारकम् → -------------------------

## ६. प्रदत्तम् कथाम् पठत *(तलको कथा पढ्नुहोस्)*

एकस्मिन् ग्रामे द्वौ युवकौ आस्ताम् । तयोः मित्रता अभिन्ना आसीत् । तौ एकवारम् वनविहाराय अगच्छताम् । तस्मिन् क्रमे तौ एकाम् प्रतिज्ञाम् कृतवन्तौ, “अत्र बहवः हिंस्रकाः जन्तवः सन्ति । आवयोः सहयात्रा अनिवार्या भवति । अतः आवाम् परस्परम् दूरतः न गच्छावः, सह एव विहरावः ।” इति ।



अकस्मात् तयोः समीपे एकः भल्लूकः आगच्छत् । भल्लूकम् दृष्ट्वा एकः युवकः मित्रम् त्यक्त्वा एकाकी शीघ्रम् वृक्षे आरूढवान् । अपरः युवकः वृक्षम् आरोढुम् न जानाति स्म । अतः सः भूमौ सुप्तवान् । सुप्त्वा सः मृतः इव स्वस्य निःश्वासम् अवरुध्य स्थितवान् ।

भल्लूकः सुप्तस्य युवकस्य समीपे गतवान् । तस्य समीपे गत्वा सः घ्रातवान् । तम् मृतम् मत्वा सः तत्र एव त्यक्त्वा अन्यत्र गतवान् ।

वृक्षे आरूढः युवकः नीचैः आगत्य स्वस्य मित्रम् पृष्टवान्, “प्रियसख ! भल्लूकः तव कर्णे किम् रहस्यम् उक्तवान् ?” । सः उत्तरितवान्, “भल्लूकः मम कर्णे उक्तवान्, यः असत्यम् वदति, तस्य मित्रस्य सङ्गतिम् न कुरु ।” इति ।

एउटा गाउँमा दुई युवक बस्दथे । उनीहरूबिच अभिन्न मित्रता थियो । तिनीहरू एकपटक वन घुम्नका लागि गए । त्यही क्रममा उनीहरूले एउटा वाचा गरे, “यहाँ धेरै हिंसक जन्तुहरू छन् । यसर्थ हामी दुवै जना सँगै हिँड्नुपर्छ । टाढा जानु हुँदैन । एकले अर्कालाई छोड्नु पनि हुँदैन । सँगै घुम्नुपर्छ ।”

अचानक उनीहरूको अगाडि एउटा भालु आयो । भालुलाई देखेर एक जना साथीलाई छोडेर तुरुन्त रुख चढ्यो । अर्को साथीलाई रुख चढ्न आउँदैनथ्यो । त्यस कारण ऊ हतार हतार भुइँमा सुत्यो । उसले सास पुरै रोक्यो र मरेको लास झैँ ऊ भुइँमा ढलिरह्यो ।

भालु सुतिरहेको युवकको नजिक गयो । त्यसको कानमा सुँघ्यो । उसलाई मरेको ठानेर भालुले छोडिदियो । भालु अन्तै गयो ।

रुखमा चढेको साथी तल ओर्लियो र उसले साथीलाई सोध्यो, "साथी ! भालुले तिम्रो कानमा के सुनायो ?" भुइँमा बसेको साथीले उत्तर दियो, "भालुले भन्यो, कहिल्यै पनि झुटो साथीको विश्वास गर्नु हुँदैन ।"

## ७. संवादम् पठित्वा उत्तरम् दत्त *(संवाद पढ्नुहोस् र उत्तर दिनुहोस्)*

(हर्षवीरः तामाङः, अभिमन्युः नेपाली च एकस्मिन् विद्यालये पठतः । मध्ये अवकाशस्य समये तयोः एवम् वार्तालापः अभूत् ।)

हर्षवीरः - सखे ! किम् अस्ति ?

अभिमन्युः - अद्य कुशलम् नास्ति । अस्वस्थः अस्मि ।

हर्षवीरः - किमर्थम् ? प्रातः भोजनम् किम् आसीत् ?

अभिमन्युः - अद्य अस्माकम् गृहे बहवः परिकाराः निर्मिताः आसन् । मया अद्य बहु भोजनम् विहितम् । तेन उदरे पीडा अस्ति ।

हर्षवीरः - अहो ! अतिभोजनम् कदा अपि नैव विधेयम् । अतिभोजनम् स्वास्थ्यस्य कृते हानिकारकम् भवति । तस्मात् सदा सात्त्विकम् भोजनम् कर्तव्यम् ।

अभिमन्युः - कीदृशम् सात्त्विकम् भोजनम् ?

हर्षवीरः - यत् स्वास्थ्यकरम् भवति, पुष्टिकारकम् च भवति । तद् एव भोजनम् सात्त्विकम् । रसमयम्, बहुतैलादिवर्जितम्, कटु-अम्लादिवर्जितम् च भोजनम् सात्त्विकम् । तथा एव भोजनस्य अधिकम् चर्वणम् आवश्यकम् ।

अभिमन्युः - अधिकम् चर्वणेन किम् भवति ?

हर्षवीरः - अहो चर्वणस्य तु अधिकम् महत्त्वम् अस्ति । चर्वणेन भोजनस्य पाचनम् सम्यक् भवति । अतः चर्वणम् अधिकम् कर्तव्यम् ।

अभिमन्युः - अस्तु धन्यवादः ! इतः परम् तथा एव करोमि ।

हर्षवीरः - धन्यवादः । अधुना कक्षासमयः । आगच्छ, कक्षायाम् गच्छावः ।

अभिमन्युः - अस्तु, सह एव गच्छावः ।



(क) कः अस्वस्थः अस्ति ?

(अ) हर्षवीरः (आ) अभिमन्युः (इ) अभिराजः

(ख) स्वास्थ्यस्य कृते किम् हानिकारकम् भवति ?

(अ) अल्पभोजनम् (आ) अतिभोजनम् (इ) सात्त्विकभोजनम्

(ग) रसमयम्, बहुतैलादिवर्जितम् च भोजनम् कीदृशम् ?

(अ) सात्त्विकम् (आ) राजसम् (इ) तामसम्

(घ) केन पाचनम् सम्यक् भवति ?

(अ) शयनेन (आ) धावनेन (इ) चर्वणेन

(ङ) अभिमन्योः कुत्र पीडा अस्ति ?

(अ) उदरे (आ) शिरसि (इ) मनसि

(हर्षवीर तामाङ र अभिमन्यु नेपाली एउटै विद्यालयमा पढ्छन् । खाजा खाने समयमा उनीहरू कुराकानी गर्दछन् ।)

हर्षवीर - साथी, तिमीलाई के भयो ?

अभिमन्यु - सन्चै छैन ।

हर्षवीर - किन ? बिहान के खायौ र ?

अभिमन्यु - आज घरमा धेरै परिकार बनेका थिए । धेरै खाएँ । पेट दुःखेको छ ।

हर्षवीर - अहो ! धेरै भोजन गर्नु हुँदैन । यो स्वास्थ्यका लागि हानिकारक हुन्छ । सधैँ शुद्ध र ठिक्कको भोजन गर्नुपर्छ । सात्त्विक भोजन गर्नुपर्छ ।

अभिमन्यु - सात्त्विक भोजन कस्तो हुन्छ र ?

हर्षवीर - स्वास्थ्यकर र पुष्टिकारक भोजन सात्त्विक भोजन हो । रसिलो तर धेरै चिल्लो, अमिलो, पिरो नभएको भोजन सात्त्विक हो । खानेकुरा धेरै राम्ररी चपाएर खानुपर्छ ।

अभिमन्यु - त्यसरी खाँदा के हुन्छ ?

हर्षवीर - खानेकुरा राम्ररी पच्छ । चबाएर खानुको महत्त्व छ ।

अभिमन्यु - तिमीलाई धन्यवाद । म अबदेखि त्यसरी नै खान्छु ।

हर्षवीर - धन्यवाद । कक्षा सुरु भयो । जाऔँ ।

अभिमन्यु - हुन्छ, जाऔँ ।

८. स्वस्य रुचिकराणाम् भोजनानाम् नामानि लिखत *(तपाईँलाई मनपर्ने खानेकुराको नाम लेख्नुहोस्)*

अन्ननामानि ------------------------------------------------------------------------

साकनामानि ------------------------------------------------------------------------

फलनामानि ------------------------------------------------------------------------

पेयपदार्थनामानि ------------------------------------------------------------------

## ९. उदाहरणानुसारेण रिक्तस्थानम् पूरयत *(उदाहरण हेरी खाली ठाउँ पूरा गर्नुहोस्)*

खेलिष्यन्ति, भविष्यतः, गमिष्यन्ति, पठिष्यति, हसिष्यतः, भ्रमिष्यति, धाविष्यति, खादिष्यतः

| | | |
|---|---|---|
| गमिष्यति | गमिष्यतः | गमिष्यन्ति |
| खादिष्यति | ------------------------------- | खादिष्यन्ति |
| खेलिष्यति | खेलिष्यतः | ------------------------------- |
| ------------------------------- | पठिष्यतः | पठिष्यन्ति |
| भविष्यति | ------------------------------- | भविष्यन्ति |
| गमिष्यति | गमिष्यतः | ------------------------------- |
| ------------------------------- | धाविष्यतः | धाविष्यन्ति |
| हसिष्यति | ------------------------------- | हसिष्यन्ति |
| ------------------------------- | भ्रमिष्यतः | भ्रमिष्यन्ति |

**स्वादु** - स्वादिलो, Tasty
**व्यञ्जनम्** - तरकारी, Curry
**स्निग्धम्** - चिल्लो, Greasy
**स्वच्छम्** - सफा, Fresh
**तापहारकम्** - दुःख हटाउने, Who/Which removes sorrow
**ग्रासः** - गाँस, A mouthful food
**चर्वणम्** - चपाउनु, Chewing
**देहरक्षणम्** - शरीरको रक्षा, Body-protection
**वातायनम्** - झ्याल, Window
**पटलम्** - छानो, Roof
**गृहारामः** - घरको बगैँचा, Home garden
**मित्रता** - मित्रता, Friendship
**वनविहाराय** - वन घुम्न, To visit jungle
**भल्लूकः** - भालु, Bear
**आरूढवान्** - चढ्यो, Climbed
**अवरुध्य** - रोकेर, Creating obstacle
**घ्रातवान्** - सुँघ्यो, Smelled
**प्रियसखः** - प्यारो साथी, Dear friend
**सङ्गतिः** - सङ्गत, Company

## नवमः पाठः

# नूतनवस्त्रम्

१. **शिक्षकेण सह वाचयत** *(शिक्षकसँगै गाउनुहोस्)*

नूतनवस्त्रम् सन्धार्य, मातुलगेहम् गच्छामः
मातुलगेहे पक्वानि, मिष्टान्नानि खादामः



प्रातः काले स्नानम् कृत्वा
मधुरम् मधुरम् दुग्धम् पीत्वा
कृष्णौ पादत्राणौ धृत्वा
परिवारस्य सर्वे मिलित्वा । नूतनवस्त्रम् ... ॥

श्वेतम् वस्त्रम् धारय अग्रज !
रक्ताम् शाटीम् धारय मातः !
धारय अनुजे ! हरितम् वस्त्रम्
गच्छामः खलु मातुलगेहम् ॥ नूतनवस्त्रम् .... ॥

(हामी) नयाँ कपडा लगाएर मामाघर जान्छौँ । मामाघरमा मिठा मिठा खानेकुरा खान्छौँ । बिहान नुहाउँछौँ । मिठो दुध खान्छौँ । काला जुत्ता लगाउँछौँ । परिवारमा सबै जना मिलेर बस्छौँ । दाजु सेतो कपडा लगाउनुहोस् । आमा रातो सारी लगाउनुहोस् । बहिनी हरियो कपडा लगाऊ । मामाघर जाऔँ ।

२. **चित्रम् वर्णयत** *(चित्रमा के भइरहेको छ ? भन्नुहोस्)*



३. चित्रम् विलोक्य कोष्ठस्थशब्दैः वाक्यानि पूरयत *(चित्र हेर्नुहोस् र तलका वाक्यहरू पूरा गर्नुहोस्)*



| (सुन्दराणि, खेलामि, खेलति, अनुजा, रक्तम्, वस्त्रम्) |
|---|

(क) मम एका ------------ अस्ति ।

(ख) सा क्रीडनकैः ------------ ।

(ग) क्रीडनकानि ------------ सन्ति ।

(घ) अहम् अपि तया सह ------------ ।

(ङ) मम ------------ पीतम् अस्ति ।

(च) अनुजायाः वस्त्रम् ------------ अस्ति ।

| (क) मेरी एउटी बहिनी छिन् । (ख) उनी खेलौनाहरूसँग खेल्छिन् । (ग) खेलौनाहरू राम्रा छन् । (घ) म पनि उनीसँग खेल्छु । (ङ) मेरो कपडा पहेँलो छ । (च) बहिनीको कपडा रातो छ । |
|---|

४. प्रदत्तानाम् सामग्रीणाम् नामानि शुद्धम् पठत *(तल दिइएका सामग्रीहरूको नाम शुद्धसँग पढ्नुहोस्)*



मञ्जूषा



खट्वा



उत्पीठिका



मञ्चः



आधानी

५. उदाहरणानुसारेण शब्दान् अन्विष्य रेखया परिवेष्टयत *(उदाहरण हेरी शब्द खोजेर गोलो घेरा लगाउनुहोस्)*

| | | | | | | |
|---|---|---|---|---|---|---|
| मा | तु | लः | न | आ | धा | नी |
| म | म | उत् | वी | अ | नु | जा |
| ञ्जू | धु | पी | न | मा | ता | अ |
| षा | र | ठि | व | पि | ता | ग्र |
| क | म् | का | स्त्र | शा | न | जः |
| द्वा | र | म् | म् | टी | प | स |

६. चित्रम् दृश्ट्वा शब्दानाम् उच्चारणम् कुरुत *(चित्र हेरी शब्दको उच्चारण गर्नुहोस्)*



अन्तरीयकम्



अधोवासः



शाटी



कञ्चुकः



शिरोवस्त्रम्



चोलिका

## ७. कथायाः द्रुतपठनम् कुरुत *(कथा छिटो छिटो पढ्नुहोस्)*

एकस्मिन् वने एकस्य मण्डूकस्य परिवारः वसति स्म । परिवारस्य प्रमुखः मण्डूकः अतीव अभिमानी आसीत् । सः अहम् सर्वेभ्यः स्थूलः अस्मि इति वदति स्म ।

एकस्मिन् दिने तस्य शिशवः वने एकम् विशालकायम् जन्तुम् अपश्यन् । सः एकः वृषभः आसीत् । वने तम् दृष्ट्वा मण्डूकस्य शिशवः अचिन्तयन्, “एषः जन्तुः अतीव विशालः अस्ति । एतस्य शिरसि शृङ्गम् अस्ति, दीर्घम् पुच्छम् च अस्ति । एषः प्राणिषु सर्वेभ्यः विशालः अस्ति किम् ?”



शिशवः गत्वा एतद् सर्वम् पितुः समक्षे अवदन् । मण्डूकः अचिन्तयत्, “कश्चिद् मदपेक्षया विशालः भवितुम् कथम् शक्नोति ?” इति विचार्य सः दीर्घम् निःश्वासम् आदाय स्वस्य शरीरम् विशालम् कृतवान् । ततः सः उक्तवान्, “किम्, सः एतावान् विशालः आसीत् ?”

शिशवः अकथयन्, “इतः अपि विशालः आसीत् ।” मण्डूकः पुनः निःश्वासम् गृहीत्वा स्वस्य शरीरम् विशालम् कारयामास । सः पुनः उक्तवान्, “इतः अपि विशालः आसीत् ?” पुनः शिशवः अकथयन्, “इतः अपि अतीव विशालः आसीत् ।”

एतत् श्रुत्वा मण्डूकः वेगेन निःश्वासम् गृहीतवान् । निःश्वासग्रहणेन तस्य शरीरम् स्फोटितम् अभवत् । अतः कदापि अधिकम् अभिमानम् नैव करणीयः । अभिमानम् विनाशस्य कारणम् भवति ।

एउटा वनमा एउटा भ्यागुतो बस्दथ्यो । उसका केही बच्चा पनि थिए । ऊ हृष्टपुष्ट थियो । ऊ आफू संसारकै ठुलो हुँ भन्ने ठान्दथ्यो ।

एक दिन उसका बच्चाहरूले जङ्गलमा ठुलो जनावर देखे । त्यो एउटा गोरु थियो । त्यो देखेर उनीहरूले सोचे, “यो यति ठुलो छ । यसको टाउकामा सिङ पनि छ । पछाडि लामो पुच्छर पनि छ । पक्कै यो संसारको सबैभन्दा ठुलो जनावर हुनुपर्छ ।”

उनीहरूले यो कुरा आफ्ना बुबालाई सुनाए । यो सुनेर भ्यागुताले विचार गऱ्यो, “कोही मभन्दा ठुलो कसरी हुन सक्छ ?” यो विचार गरेर उसले लामो सास लिएर आफ्नो शरीर फुलायो । उसले आफ्ना बच्चाहरूलाई सोध्यो, “के यहाँभन्दा पनि ठुलो थियो ?”

बच्चाहरूले भने, “योभन्दा पनि ठुलो थियो ।” यो सुनेर भ्यागुताले फेरि पनि लामो सास लिएर आफ्नो शरीर फुलायो । अनि फेरि सोध्यो, “योभन्दा पनि ठुलो ?” उनीहरूले फेरि पनि भने, “योभन्दा पनि धेरै ठुलो थियो ।”

बच्चाहरूको कुरा सुनेर उसले फेरि गहिरो श्वास तान्यो । यसपटक भ्यागुताको शरीर फुलेर फुट्यो । तसर्थ धेरै घमन्ड गर्नु हुँदैन । घमन्ड विनाशको कारण हो ।

८. अनुच्छेदम् पठित्वा प्रश्नान् उत्तरयत *(अनुच्छेद पढी प्रश्नको उत्तर दिनुहोस्)*





सुनीता आले गृहस्य कृत्येषु मातुः सहयोगम् करोति । सा अधुना बालिका अस्ति । स्वशक्त्या यत् कर्तुम् शक्नोति तत् करोति । तस्याः गृहे एकम् उद्यानम् अस्ति । उद्याने पुष्पाणि सन्ति । सुनीता सायङ्काले पुष्पाणि, शाकानि च जलेन सिञ्चति । माता भोजनपात्राणि प्रक्षालयति । सा तानि पात्राणि यथास्थानम् स्थापयति ।

सुनीता प्रातः उत्थाय शय्यायाः संयोजनम् करोति । स्वस्य प्रकोष्ठस्य सम्मार्जनम् अपि सा स्वयम् एव करोति । सुनीतायाः गृहे अजाः पालिताः सन्ति । पिता वनाद् घासम् आनयति । सा अजेभ्यः घासम् ददाति । माता वस्त्राणि प्रक्षाल्य सूर्यप्रकाशे शोषयति । सुनीता शुष्कवस्त्राणि उत्थाप्य आनयति । वस्त्राणि संयोज्य आधान्याम् स्थापयति ।

भोजनस्य समये सुनीता पात्राणि सज्जीकरोति । पानीयम् सारयति । अन्त्ये सा भोजनस्थलस्य सम्मार्जने सहयोगम् करोति । सुनीतायाः व्यवहारम् दृष्ट्वा तस्याः माता पिता च सन्तोषम् अनुभवतः ।

(क) सुनीता सायङ्काले किम् करोति ?

(अ) विद्यालये गत्वा पठति ।

(आ) सखिभिः सह खेलम् खेलति ।

(इ) पुष्पाणि, शाकानि च सिञ्चति ।

(ख) प्रातः उत्थाय सुनीता किम् करोति ?

(अ) पुनः शयनम् करोति ।

(आ) शय्यायाः संयोजनम् करोति ।

(इ) प्राङ्गणे गत्वा कोलाहलम् करोति ।

(ग) प्रकोष्ठस्य सम्मार्जनम् कः करोति ?

(अ) सुनीता स्वयम् एव

(आ) सुनीतायाः माता

(इ) सुनीतायाः भ्राता

(घ) वस्त्राणि संयोज्य सुनीता कुत्र स्थापयति ?

(अ) शय्यायाम् (आ) भूमौ (इ) आधान्याम्

(ङ) सुनीतायाः व्यवहारम् दृष्ट्वा माता पिता च किम् कुरुतः ?

(अ) शोकम् कुरुतः । (आ) सन्तोषम् अनुभवतः । (इ) गर्वम् कुरुतः ।

सुनीता आले घरको काममा आमालाई सहयोग गर्दछिन् । अहिले उनी बालिका छन् । उनी आफ्नो क्षमताअनुसार सक्ने काम गर्छिन् । उनको घरछेउ बगैँचा छ । त्यहाँ फूल फुलेका छन् । सुनीता साँझ फूल र सागमा पानी हाल्छिन् । आमा भाँडा माझ्नुहुन्छ । सुनीता भाँडा ठिक ठाउँमा राख्छिन् ।

सुनीता बिहान उठेर ओछ्यान मिलाउँछिन् । उनी आफ्नो कोठा आफैँ बढार्छिन् । सुनीताका घरमा बाख्रा पालिएका छन् । बुबा वनबाट घाँस ल्याउनुहुन्छ । सुनीता बाख्रालाई घाँस हाल्छिन् । आमा भाँडा माझेर घाममा सुकाउनुहुन्छ । सुनीता सुकेका कपडा उठाएर ल्याउँछिन् । उनी पट्याएर दराजमा राख्छिन् ।

भोजनको समयमा सुनीता भाँडा ठिक पार्छिन् । पानी सारेर राख्छिन् । अन्त्यमा उनी भोजन गरेको ठाउँ सफा गर्न सहयोग गर्छिन् । सुनीताको व्यवहार देखेर आमाबुबा सन्तुष्ट हुनुहुन्छ ।

## ९. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
| पुष्पाणि शाकानि च | सज्जीकरोति |
| अजेभ्यः | आधान्याम् स्थापयति |
| शुष्कवस्त्राणि | जलेन सिञ्चति |
| पात्राणि | घासम् ददाति |
| वस्त्राणि संयोज्य | उत्थाप्य आनयति |

## १०. कोष्ठकात् समुचितम् क्रियापदम् विचित्य रिक्तस्थानम् पूरयत *(कोठाबाट उपयुक्त क्रियापद छानेर खाली ठाउँ भर्नुहोस्)*

| पठिष्यामः, खेलिष्यामः, आगमिष्यामः, खादिष्यामः, भ्रमिष्यामः |
|---|

वयम् श्वः विद्यालये गमिष्यामः ।

कथाम् (पठ्) ........... ।

खेलम् (खेल्) ......... ।

सायम् गृहम् (आगम्) ........... ।

गृहम् आगत्य स्वल्पाहारम् (खाद्) .......... ।

उपवने (भ्रम्) .......... ।

नूतनवस्त्रम् - नयाँ कपडा, New cloth
मातुलगेहः - मामाघर, Mother's brother's home
पादत्राणौ - जुत्ता (दुईओटा), Two shoes
शाटी - सारी, Saree
मञ्जूषा - बाकस, Box
उत्पीठिका - टेबल, Table
आधानी - दराज, Cupboard
अन्तरीयकम् - भित्री कपडा, Inner clothes
कञ्चुकः - सर्ट, टिसर्ट वा कमिज, Shirt
शिरोवस्त्रम् - टोपी, Cap
चोलिका - चोलो, Blouse
मण्डूकः - भ्यागुतो, Frog
स्थूलः - ठुलो, Big
विशालः - ठुलो, Big
शृङ्गम् - सिङ, Horn
समक्षे - अगाडि, In the presence
निःश्वासः - सास, Breath
सहयोगः - सहायता, Help
स्वशक्त्या - आफूले सकेजति, According to one's own capacity
यथास्थानम् - ठिक ठाउँमा, On the right place
शुष्कवस्त्राणि- सुकेका कपडा, Dry clothes
सज्जीकरोति - तयार पार्छिन्, Prepares

## दशमः पाठः

## जलरक्षणम्

१. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

रम्यः रम्यः
तत्र एकः तडागः
स्वच्छम् स्वच्छम्
वर्तते तत्र वारि ।
चित्राः मत्स्याः
सन्ति एकत्रिताः वै
नित्यम् अस्मान्
क्रीडनम् दर्शयन्ति ॥



त्यहाँ एउटा सुन्दर तलाउ छ । त्यहाँ सफा पानी छ । त्यहाँ एकै ठाउँमा धेरैथरी माछाहरू छन् । ती माछाले हामीलाई सधैँ खेल देखाउँछन् ।

२. चित्रस्य नाम लिखत *(चित्रको नाम लेख्नुहोस्)*



इदम् ------------ अस्ति ।



अयम् ------------ अस्ति ।



एषा ------------ अस्ति ।



इयम् ------------ अस्ति ।

३. चित्राधारेण समुचितम् विकल्पम् विचित्य रिक्तस्थानम् पूरयत *(चित्रका आधारमा ठिक शब्द राखी खाली ठाउँ भर्नुहोस्)*



| |
|---|
| सुन्दरम्, गृहम्, वृक्षाः, चित्राणि, हरिताः, गवाक्षाः, सुगन्धः, सर्वेभ्यः, स्वच्छम्, पर्यावरणम्, सुगन्धः, सर्वेभ्यः, उद्यानम्, पुष्पाणि |

अत्र एकम् ------------ अस्ति । गृहस्य अग्रभागे ------------ अस्ति । उद्यानम् ------------ अस्ति ।

उद्याने ------------ सन्ति । पुष्पाणि ------------ सन्ति । गृहस्य समीपे ------------ अपि सन्ति ।

वृक्षाः ------------ सन्ति । गृहे ------------ सन्ति । गवाक्षेभ्यः गृहे पुष्पाणाम् ------------ प्रविशति ।

------------ स्वच्छम् विद्यते । ------------ पर्यावरणम् सर्वेभ्यः रोचते ।

| |
|---|
| यहाँ एउटा घर छ । घरको अगाडिपट्टि बगैँचा छ । बगैँचा राम्रो छ । बगैँचामा फूलहरू छन् । फूलहरू रङ्गीबिरङ्गी छन् । घरको नजिकै रुखहरू पनि छन् । रुखहरू हरिया छन् । घरमा झ्यालहरू छन् । झ्यालबाट घरमा फूलको बास्ना छिर्दछ । घरको वरिपरि सफा वातावरण छ । सफा वातावरण सबैलाई मन पर्छ । |

## ४. चित्रम् दृष्ट्वा जन्तूनां नामानि वदत *(चित्र हेर्नुहोस् र जनावरको नाम भन्नुहोस्)*



बिडालः



गण्डकः



वानरः



गजः



गर्दभः



सिंहः

## ५. उदाहरणम् अनुसृत्य शब्दौ विभाजयत *(उदाहरणमा दिएजस्तै गरी शब्द छुट्याउनुहोस्)*

अपरदिने = अपर+दिने

निम्बवृक्षः = ----------------------------

मत्स्यजालम् = ----------------------------

प्राणरक्षा = ----------------------------

अग्रभागे = ----------------------------

## ६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
|  | मुरजः |
|  | डमरुकम् |
|  | तन्तुवाद्यम् |
|  | मृदङ्गः |
|  | वंशी |

## ७. भाषिकचिह्नानि अनुसृत्य प्रदत्तम् अनुच्छेदम् पठत *(भाषिक चिह्नको अनुसरण गरेर तलको अनुच्छेद पढ्नुहोस्)*

एकः धीवरः आसीत् । सः सदैव पुष्करिण्याम् नद्याम् च गत्वा मत्स्यान् मारयति स्म । एकस्मिन् दिने सायङ्काले सः एकस्याम् पुष्करिण्याम् बहून् मत्स्यान् अपश्यत् । अपरस्मिन् दिने आगत्य एतान् सर्वान् मत्स्यान् मारयिष्यामि इति विचिन्त्य स गृहम् अगच्छत् । तस्याम् पुष्करिण्याम् शफरी, शकुली, पृथुरोमा, विसारा इति चतुर्णाम् मत्स्यानाम् समूहाः आसन् । तेषु मध्ये पृथुरोमानामकः मत्स्यः अतीव चतुरः आसीत् । पूर्वम् तेन मत्स्येन धीवरः परिचितः । श्वस्तनदिवसे सः धीवरः अस्मान् अवश्यम् एव मारयिष्यति इति तेन निश्चयः कृतः । ततः तत्रत्यान् अन्यान् मत्स्यान् आहूय सर्वम् अकथयत् । त्रिभिः मत्स्यसमूहैः प्राणरक्षणार्थम् अन्यत्रैव गन्तव्यम् इति निश्चयः कृतः । ततः ते रात्रौ एव अपरस्याम् पुष्करिण्याम् अगच्छन् । एकः शकुलीसमूहः यद् भाव्यम् तद् भविष्यति

इति विचारितवान् । सः सखिभिः सह अन्यत् स्थानम् न अगच्छत् । अपरस्य दिनस्य प्रातःकाले सः धीवरः तत्र मत्स्यजालम् प्राक्षिपत् । तस्मात् जालात् सः शकुलीसमूहम् मारयित्वा गृहम् अनयत् ।



एउटा माझी थियो । ऊ सधैँभरि पोखरी र नदीमा गएर माछा मार्दथ्यो । एक दिन माछा खोज्ने क्रममा उसले साँझपख एउटा पोखरीमा धेरै माछा देख्यो । भोलि बिहानै आएर सबै माछा मार्ने योजना बनाएर ऊ घर गयो । त्यस पोखरीमा शफरी, शकुली, पृथुरोमा र विसारा गरी चार समूहका माछा थिए । तिनीहरूमा पृथुरोमा नाम गरेको माछो साह्रै चलाख थियो । सबैभन्दा पहिले उसले सिकारी माझीलाई चिन्यो । उसले भोलि त्यस माझीले हामी सबैलाई अवश्य मार्ने छ भन्ने सोच्यो । त्यसपछि उसले पोखरीमा भएका सबै माछालाई बोलायो । उसले आफूहरूलाई मार्ने कुरा बतायो । तीन समूहका माछाले प्राण बचाउनका लागि अर्को ठाउँमा जाने निश्चय गरे । त्यसपछि उनीहरू राति नै अर्को पोखरीमा गए । शकुली समूहका माछा हुने कुरा भएरै छाड्छ भनेर अर्को ठाउँमा गएनन् । भोलिपल्ट बिहानै माझीले जाल हान्यो । जालभरिका शकुली समूहका माछालाई मारेर तिनलाई लिई ऊ घर गयो ।

८. अनुच्छेदम् पठित्वा प्रश्नानाम् समुचितानि उत्तराणि रेखया परिवेष्टयत *(अनुच्छेद पढी प्रश्नको सही उत्तरमा गोलो घेरा लगाउनुहोस्)*

हेलम्बुनामकः एकः ग्रामः अस्ति । सन्तमान चौधरी भ्रमणार्थम् तत्र अगच्छत् । सः आयुर्वेदविज्ञः आसीत् । सः ग्रामस्थान् सर्वान् जनान् आहूतवान् । सः ग्रामीणान् तुलसीवृक्षस्य महत्त्वम् ज्ञापितवान् । शक्तिप्रदायाः अमृतलतायाः विषये अपि सः ग्रामीणान् अज्ञापयत् । सः निम्बवृक्षस्य पिप्पलवृक्षस्य च वैशिष्ट्यम् अकथयत् । अन्ते सः अवदत्, "हिमालयः औषधानाम् आकरः वर्तते । अत्रत्यम् औषधम् अस्माकम् कृते हितकरम् भवति ।"



(क) सन्तमानः भ्रमणार्थम् कुत्र अगच्छत् ?

(अ) चौरीखर्कग्रामे (आ) मेघौलीग्रामे (इ) हेलम्बुग्रामे

(ख) कः भ्रमणार्थम् अगच्छत् ?

(अ) छत्रमानः (आ) राममानः (इ) सन्तमानः

(ग) सन्तमानः कस्य वृक्षस्य महत्त्वम् ज्ञापितवान् ?

(अ) आम्रवृक्षस्य (आ) वटवृक्षस्य (इ) तुलसीवृक्षस्य

(घ) अमृतलता कीदृशी अस्ति ?

(अ) शक्तिप्रदा (आ) रोगप्रदा (इ) मृत्युप्रदा

(ङ) औषधानाम् आकरः कः वर्तते ?

(अ) देवालयः (आ) भोजनालयः (इ) हिमालयः

(ङ) अस्माकम् कृते कीदृशम् औषधम् हितकरम् भवति ?

(अ) वैदेशिकम् (आ) अत्रत्यम् (इ) तत्रत्यम्

हेलम्बु नाम गरेको एउटा गाउँ छ । सन्तमान चौधरी घुम्नका लागि त्यहाँ गए । उनी आयुर्वेद जान्ने थिए । उनले सबै गाउँलेलाई बोलाए । उनले गाउँलेहरूलाई तुलसीको महत्त्व बुझाए । शक्ति दिने गुर्जोका बारेमा पनि उनले गाउँलेलाई जानकारी दिए । उनले निमको बोट र पिपलको बोटको विशेषताबारे पनि भने । अन्त्यमा उनले भने, "हाम्रो हिमाल औषधीको खानी हो । यहींको औषधी नै हाम्रा लागि हितकारी हुन्छ ।"

९. स्वस्य समुदाये समायोज्यमानस्य कस्यचन पर्वोत्सवस्य विषये पञ्च वाक्यानि लिखत *(तपाईंको समुदायमा मनाइने कुनै एउटा चाडपर्वका बारेमा पाँच वाक्य लेख्नुहोस्)*

------------------------------------------------------------------------

------------------------------------------------------------------------

------------------------------------------------------------------------

------------------------------------------------------------------------

------------------------------------------------------------------------

------------------------------------------------------------------------

------------------------------------------------------------------------

सुन्दरम् - राम्रो, Beautiful
अग्रभागे - अगाडि, Front
गृहम् - घर, House
वृक्षाः - रुखहरू, Trees
बहूनि - धेरै, Many
चित्राणि - अनेक रङ्ग, Many colours
हरिताः - हरिया, Green
परितः - वरिपरि, Around
गवाक्षाः - झ्यालहरू, Windows
सुगन्धः - बास्ना, Good smell
बिडालः - बिरालो, Cat
गण्डकः - गैँडा, Rhino
वानरः - बाँदर, Monkey
गजः - हात्ती, Elephant
गर्दभः - गधा, Donkey
सिंहः - सिंह, Lion
मृदङ्गः - मादल, Madal
मुरजः - तबला, Tabala
डमरुकम् - डमरु, Damaru
तन्तुवाद्यम् - गितार, Guitar
वंशी - बाँसुरी, Flut
आकरः - खानी, Mine

## एकादशः पाठः

# स्त्रीवर्गः

१. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

महिषस्य महिषी
नरस्य वै नारी
कच्छपस्य कमठी
भेकस्य तु भेकी ॥

वृषस्य वर्तते गौः
मत्स्यस्य तु मत्सी
वानरस्य सुन्दरी
गजस्य तु करिणी ॥

घोटकस्य वडवा
हंसस्य तु वरटा
चटकस्य चटका
अजस्य तु अजा ॥

जानन्तु रे बालाः
एतेषाम् स्त्रीलिङ्गाः ॥












राँगाको भैँसी, नरकी नारी । कछुवाको कछुवी भ्यागुताको भ्यागुती । गोरुको गाई, माछाको माछी । बाँदरको बाँदरनी, हात्तीको ढोई । घोडाको घोडी, हाँसको हंसी । भँगेराको भँगेरी, बोकाको बाखी । नानीबाबुहरू हो ! जानिराख यी प्राणीको स्त्रीलिङ्ग ।

२. चित्रम् विलोक्य कोष्ठस्थशब्दैः वाक्यानि पूरयत *(चित्र हेरी कोठाका शब्द राखेर वाक्य पूरा गर्नुहोस्)*

| |
|---|
| वाद्यवादकाः, मृदङ्गम् दुन्दुभिम्, ढक्काम्, वाद्यवादनम्, सुन्दराणि, समारोहः |



अत्र ----------- सन्ति । केचन ----------- वादयन्ति । कौचन ----------- वादयतः । केचन ----------- वादयन्ति । सामाजिकेषु विशेषकार्येषु ----------- भवति । वाद्यवादकाः ----------- वस्त्राणि धारयन्ति । अत्र विशेषः ----------- दृश्यते ।

| |
|---|
| यहाँ बाजा बजाउनेहरू छन् । कोही दमाहा बजाउँछन् । कुनै दुई जना कर्नाल बजाएका छन् । कसैले मादल बजाउँछन् । विशेष सामाजिक कार्यमा बाजा बजाउने काम हुन्छ । बाजा बजाउनेहरू राम्रा लुगा लगाउँछन् । यहाँ विशेष समारोह देखिन्छ । |

## ३. चित्रम् दृष्ट्वा नाम वदत *(चित्र हेर्नुहोस् र नाम भन्नुहोस्)*


घटस्थापना


रोटिका


अजः


महिषः


उष्ट्रः


पिपीलिका


उद्यानम्


निर्झरः

## ४. उदाहरणम् अनुसृत्य शब्दौ संयोजयत *(उदाहरण हेरी शब्द जोड्नुहोस्)*

बहु + कालम् = बहुकालम्

वाद्य + वादनम् = ----------------------------

वायु + यानम् = ------------------------------

घट + स्थापना = ----------------------------

पूर्व + दिने = --------------------------------

विशेष + कार्येषु = --------------------------------

## ५.   परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*



वायुयानम्



द्विचक्रिका



बसयानम्



रेलयानम्



जलयानम्

## ६. भाषिकचिह्नानि अनुसृत्य प्रदत्तम् अनुच्छेदम् पठत *(भाषिक चिह्नको अनुसरण गरेर तलको अनुच्छेद पढ्नुहोस्)*



एकः विशालः वटवृक्षः आसीत् । तस्मिन् वृक्षे बहूनाम् विहगानाम् नीडानि आसन् । रात्रौ सर्वे विहगाः तत्र वसन्ति स्म । प्रातःकाले आहारार्थम् ते दूरम् गच्छन्ति स्म । ते मध्ये मध्ये आगत्य शावकान् भोज्यम् खादयन्ति स्म । एकस्मिन् दिने एकः बिडालः शावकान् अखादत् । सायङ्काले नीडे शावकान् अदृष्ट्वा विहगाः चिन्तिताः अभवन् । अपरस्मिन् दिने एकः वृद्धः गृध्रः तत्र आगतः । सः वासस्थानम् अयाचत । अपरिचितम् तम् गृध्रम् विलोक्य विहगाः विचारितवन्तः । शावकानाम् रक्षणार्थम् एषः गृध्रः आवश्यकः अस्ति । ततः ते अकथयन्, "त्वम् अस्य वृक्षस्य कोटरे तिष्ठ । अस्माकम् शावकानाम् रक्षाम् कुरु । वयम् तव कृते अपि नित्यम् आहारम् आनयामः ।" गृध्रः तेषाम् वचनम् स्वीकृतवान् । ततः सर्वे विहगाः आहारस्य अन्वेषणाय अगच्छन् । सायङ्काले नीडे सर्वान् शावकान् दृष्ट्वा प्रसन्नाश्च अभवन् । अनया रीत्या एकः सप्ताहः व्यतीतः । एकस्मिन् दिने सर्वान् शावकान् खादयित्वा गृध्रः पलायितः । सायङ्काले विहगाः स्वनीडे शावकान् गृध्रम् च नैव अपश्यन् । 'गृध्रः सर्वम् अखादत्' इति निश्चित्य ते बहुकालम् यावत् चिन्तितवन्तः । अतः अपरिचितः नैव विश्वस्तव्यः ।

एउटा ठुलो वरको रुख थियो । त्यो रुखमा धेरै चराको गुँड थियो । राति सबै चरा त्यहाँ बस्दथे । उनीहरू बिहान चारा खोज्न टाढा टाढा जान्थे । बिच बिचमा आएर बचेरालाई चारा खुवाउँथे । एक दिन एउटा बिरालाले चराहरू नभएको बेलामा केही बचेरालाई मारेर खायो । साँझमा गुँडमा आफ्ना बचेरालाई नदेखेर चराहरू चिन्तामा परे । भोलिपल्ट एउटा बुढो गिद्ध त्यहाँ आयो । अशक्त मलाई बस्ने ठाउँ देऊ भन्यो । नचिनेको त्यस गिद्धलाई देखेर र उसको वचन सुनेर चराहरूले विचार गरे । चारा खोज्न जाँदा बाँकी रहेका यी बचेरा गुँडमा डराउने छन् । यिनीहरूको हेरचाहका लागि यो गिद्ध आवश्यक छ भन्ने विचार गरे र भने, "तिमी यहीँ बसेर यी बचेराको हेरचाह गर । हामी तिम्रा लागि पनि दैनिक खाना ल्याउँछौँ ।" त्यसपछि सबै चराहरू चारा खोज्नका लागि गए । साँझमा गुँडमा सबै बचेरालाई देखेर उनीहरू खुसी भए । यही क्रमले एक हप्ता बित्यो । एक दिन एक एक गरी सबै बचेरा खाएर गिद्ध भाग्यो । बेलुका चराहरूले आफ्नो गुँडमा बचेरा र गिद्धलाई देखेनन् । गिद्धले सबै खायो भन्ने निश्चय गरेर उनीहरू धेरै समयसम्म चिन्तित भए । त्यसैले नचिनेकालाई विश्वास गर्नु हुँदैन ।

७. अनुच्छेदम् श्रुत्वा समुचितम् उत्तरम् रेखया परिवेष्टयत *(अनुच्छेद सुन्नुहोस् र सही उत्तरमा गोलो घेरा लगाउनुहोस्)*

पूर्वम् अस्माकम् ग्रामे विद्युत् नासीत् । यानमार्गः अपि समीचीनः नासीत् । तस्मिन् समये जनानाम् मतैक्यम् नासीत् । तेन कारणेन अस्माकम् ग्रामः अविकसितः आसीत् । वर्तमानसमये सर्वे जनाः एकत्रिताः सन्ति । ग्रामस्य विकासाय सर्वे प्रयतन्ते । अधुना अविच्छिन्ना विद्युत् आगच्छन्ती अस्ति । यानमार्गः समीचीनः वर्तते । स्वास्थ्यकेन्द्रम् अपि अत्रैव वर्तते । पठनाय विद्यालयाः सन्ति । इदानीम् अस्माकम् ग्रामः विकसितः वर्तते ।



(क) इदानीम् कीदृशी विद्युत् अस्ति ?

(अ) विच्छिन्ना (आ) अविच्छिन्ना (इ) स्वल्पविच्छिन्ना

(ख) वर्तमानसमये जनाः कीदृशाः सन्ति ?

(अ) भिन्नाः (आ) रुग्णाः (इ) एकत्रिताः

(ग) पूर्वम् केन कारणेन ग्रामे विकासः न अभवत् ?

(अ) ज्ञानस्य अभावेन (आ) धनस्य अभावेन (इ) एकतायाः अभावेन

(घ) इदानीम् ग्रामः कीदृशः अस्ति ?

(अ) अविकसितः (आ) विकसितः (इ) दुर्गमः

पहिला हाम्रो गाउँमा बिजुली थिएन । राम्रो बाटो थिएन । त्यस समयमा मानिसहरूका बिच एकता थिएन । त्यही कारणले हाम्रो गाउँ अविकसित थियो । अहिले सबै मानिस एकजुट भएका छन् । निरन्तर बत्ती आउँछ । बाटोघाटो पनि साह्रै राम्रो छ । अस्पताल यहीँ छ । पढ्नका लागि विद्यालय यहीँ छन् । अहिले हाम्रो गाउँ विकसित भएको छ ।

## ८. केषाञ्चन चतुर्णाम् वन्यजन्तूनाम् चित्राणि कोष्ठे उपन्यस्य नामानि लिखत

*(जङ्गलमा पाइने कुनै चारओटा जनावरको चित्र कोठामा टाँसी नाम लेख्नुहोस्)*

| | |
|---|---|
| (--------------------------------) | (--------------------------------) |
| (--------------------------------) | (--------------------------------) |

## ९. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

गौः



अजा



महिषी



हंसः



मूषकः



शशकः



| | | |
|---|---|---|
| दुन्दुभिः - कर्नाल, Karnal | सूकरः - सुँगुर, Pig | बसयानम् - गाडी, Bus |
| ढक्काम् - दमाहा, Large drum | उष्ट्रः - उँट, Camel | रेलयानम् - रेल, Train |
| वाद्यवादनम् - बाजा, Band | पिपीलिका - कमिला, Ant | द्विचक्रिका - साइकल, Cycle |
| दुर्गमः - जान गाह्रो हुने ठाउँ, Remote | उद्यानम् - बँगैचा, Garden | वृद्धः - बुढो, Old |
| वस्त्राणि - कपडाहरू, Clothes | निर्झरः - झरना, Water falls | गृध्रः - गिद्ध, Vulture |
| समारोहः - सम्मेलन, Confernece | वायुयानम् - हवाईजहाज, Air plane | नीडम् - गुँड, Nest |
| अजः - बोको, He goat | जलयानम् - पानीजहाज, Ship | शावकाः- बचेराहरू, The youngs of a bird |

## द्वादशः पाठः

# भ्रमणम्

१. **शिक्षकेण सह वाचयत** *(शिक्षकसँगै गाउनुहोस्)*



रम्य स्थलानि यास्यामः ।
नवीनम् ज्ञानम् प्राप्स्यामः ॥
जन्तुशालाम् मेलास्थानम् ।
भ्रमित्वा गीतम् गास्यामः ॥



रुचिराम् वाटिकाम् द्रक्ष्यामः ।
पुष्पसुरभिम् घ्रास्यामः ॥
मधुरम् पानीयम् पास्यामः ।
दीनाय द्रव्यम् दास्यामः ॥

रमाइला ठाउँहरूमा जाने छौँ । नयाँ ज्ञान पाउने छौँ । चिडियाखाना र मेला लागेका ठाउँहरू घुमी गीत गाउने छौँ । राम्रो बगैँचा हेर्ने छौँ । फूलहरूको सुगन्ध सुँघ्ने छौँ । मिठो पानी पिउने छौँ । दुःखीलाई पैसा दिने छौँ ।

२. **लयम् अनुसृत्य पठत** *(लय मिलाई पढ्नुहोस्)*

काकचेष्टा बकध्यानम् श्वाननिद्रा तथैव च ।
अल्पाहारी गृहत्यागी विद्यार्थि-पञ्चलक्षणम् ॥

कागको जस्तै चनाखोपन, बकुल्लाको जस्तै एकाग्रता, कुकुरको जस्तै क्षणिक निद्रा, ठिक्कको खानपिन र विद्या आर्जनका लागि घरबाट टाढाको बसाइ विद्यार्थीका पाँच लक्षण हुन् ।

३. कोष्ठकस्य शब्दान् प्रयुज्य रिक्तस्थानम् पूरयत *(कोष्ठकका शब्द प्रयोग गरी खाली ठाउँ भर्नुहोस्)*




| |
|---|
| द्वारपालः, छात्राः, मूलद्वारम्, निरीक्षणम्, ते, प्रविशन्ति, द्वारम्, अनुमतिम् |

इदम् विद्यालयस्य ------------ अस्ति । अत्र ------------ अस्ति । ------------ आगच्छन्ति । ------------ द्वारपालम् नमस्कुर्वन्ति । द्वारपालः ------------ उद्घाटयति । छात्राः अन्तः ------------ । शिक्षकाणाम् ------------ विना छात्राः निर्गन्तुम् न शक्नुवन्ति । द्वारपालः तत्र सम्यक् ------------ करोति ।

| |
|---|
| यो विद्यालयको मूल ढोका हो । यहाँ द्वारपाल हुनुहुन्छ । विद्यार्थीहरू आउँछन् । उनीहरू द्वारपाललाई नमस्कार गर्छन् । द्वारपाल ढोका खोलिदिनुहुन्छ । विद्यार्थीहरू भित्र पस्छन् । शिक्षकहरूको अनुमतिबिना उनीहरू बाहिर निस्कन सक्दैनन् । द्वारपाल त्यहाँ राम्रो रेखदेख गर्नुहुन्छ । |

## ४. चित्राणाम् नामानि कथयत *(चित्रका नाम भन्नुहोस्)*




मूलद्वारम्



प्रार्थनासभा



खाद्यकशाला



प्राकारः



सङ्गणककक्षः



कर्मकरः

## ५. उदाहरणम् अनुसृत्य वर्णसंयोजनेन शब्दान् निर्मात *(उदाहरणमा दिएजस्तै वर्ण जोडी शब्द बनाउनुहोस्)*

द् + व्+ आ + र् + अ + म् = द्वारम्

(क) प् + र् + आ + र् + थ् + अ + न् + आ = ------------

(ख) ख् + आ + द् + य् + अ + क् + अ + म् = ------------

(ग) प् + र् + आ + क् + आ + र् + अः = ------------

(घ) स् + अ + ङ् + ग् + अ + ण् + अ + क् + अ + म् = ------------

(ङ) क् + अ + र् + म् + अ + क् + अ + र् + अः = ------------

## ६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*



वृक्षरोपणम्



प्रार्थना



सङ्गणकम्



करण्डः




पौत्रः



जन्तुशाला

७. कथाम् पठित्वा ततः प्राप्तम् सन्देशम् पुस्तिकायाम् लिखत *(कथा पढी त्यसबाट पाइने सन्देश कापीमा लेख्नुहोस्)*

युधिष्ठिरः राजसूययज्ञम् आयोजयत् । तत्र बहवः अतिथयः निमन्त्रिताः आसन् । तेषु भगवान् श्रीकृष्णः अपि निमन्त्रितः आसीत् । सर्वे स्वकार्येषु व्यस्ताः आसन् । श्रीकृष्णः परितः अपश्यत् । सः युधिष्ठिरम् अपृच्छत्, "मम कृते नास्ति किमपि कार्यम् ?" युधिष्ठिरः अञ्जलिम् बद्ध्वा अवदत्, "भवतः कृते तु नास्ति ।" श्रीकृष्णः पुनः परितः अपश्यत् । सः अकथयत्, "अहम् कार्यम् प्राप्नुवम् ।" सः अतिथीनाम् भोजनपत्राणि सङ्कलयितुम् आरभत । युधिष्ठिरः अवदत्, "भवद्भिः एतत् किम् कृतम् ?" श्रीकृष्णः उदतरत्, "सेवा ।"



युधिष्ठिरले राजसूययज्ञको आयोजना गरे । त्यहाँ धेरै अतिथिहरू निमन्त्रित थिए । तिनीहरूमा भगवान् श्रीकृष्ण पनि निमन्त्रित हुनुहुन्थ्यो । सबै जना आआफ्नो काममा व्यस्त थिए । श्रीकृष्णले चारैतिर हेर्नुभयो । उहाँले युधिष्ठिरलाई सोध्नुभयो, "मेरा लागि केही काम छैन ?" युधिष्ठिरले हात जोडेर भन्नुभयो, "हजुरका लागि त छैन ।" श्रीकृष्णले फेरि चारैतिर हेर्नुभयो । उहाँले भन्नुभयो, "मैले काम पाएँ ।" उहाँ अतिथिहरूले भोजन गरेर छोडेका जुठा टपरी जम्मा गर्न थाल्नुभयो । युधिष्ठिरले भन्नुभयो, "हजुरले यो के गर्नुभएको ?" श्रीकृष्णले उत्तर दिनुभयो, "सेवा ।"

८. अनुच्छेदम् श्रुत्वा पृष्टानाम् प्रश्नानाम् उचितोत्तरे (√) चिह्नम् योजयत *(अनुच्छेद सुनी सोधिएका प्रश्नको सही उत्तरमा (√) चिह्न लगाउनुहोस्)*

ह्यः वातावरणदिवसः आसीत् । वयम् उत्सवस्य रूपेण एतम् दिवसम् अमानयाम । विद्यालयम् परितः वयम् वृक्षरोपणम् अकुर्म । वातावरणस्य विषये विशेषः कार्यक्रमः अभवत् । अस्माकम् प्रधानाचार्यः प्रार्थनासभायाम् भाषणम् अकरोत् । सः वातावरणस्य संरक्षणस्य विषये अवोचत् । वयम् तस्मिन् विषये सम्यक् ज्ञानम् प्राप्नुम ।




(क) ह्यः कः आसीत् ?

(अ) वातावरणदिवसः (आ) श्रमिकदिवसः (इ) मातृदिवसः

(ख) विद्यालयम् परितः किम् अकुर्वन् ?

(अ) वृक्षच्छेदनम् (आ) जलसेचनम् (इ) वृक्षरोपणम्

(ग) कः प्रार्थनासभायाम् भाषणम् अकरोत् ?

(अ) राष्ट्रपतिः (आ) वातावरणमन्त्री (इ) प्रधानाचार्यः

(घ) छात्राः कस्मिन् विषये ज्ञानम् प्राप्नुवन् ?

(अ) विज्ञानविषये (आ) गणितविषये (इ) वातावरणसंरक्षणस्य विषये

हिजो वातावरण दिवस थियो । हामीले उत्सवका रूपमा यस दिनलाई मनायौं । विद्यालयको वरिपरि हामीले वृक्षरोपण गऱ्यौं । वातावरणका विषयमा विशेष कार्यक्रम भयो । हाम्रा प्रधानाचार्यले प्रार्थनासभामा भाषण गर्नुभयो । उहाँले वातावरणको संरक्षणका विषयमा बताउनुभयो । हामीले त्यस विषयमा राम्रो ज्ञान पायौं ।

९. उचितम् रङ्गम् भरित्वा रिक्तस्थानम् पूरयत *(सुहाउँदो रङ भरी खाली ठाउँ पूरा गर्नुहोस्)*



अत्र ---------------------------------- वर्तन्ते ।

रम्यम् - रमाइलो, Enjoyble
रुचिरा - राम्रो, Beautiful
द्रव्यम् - धन, Wealth
स्थलम् - स्थान, Place
वाटिका - बगैँचा, Garden
मूलम् - मुख्य, Main
नवीनम् - नयाँ, New
पुष्पम् - फूल, Flower
द्वारम् - ढोका, Door
पानीयम् - पानी, Water
अनुमतिः - अनुमति, Permission
जन्तुशाला - चिडियाखाना, Zoo

गीतम् - गीत, Song
सुरभिः - सुगन्ध, Good smell
द्वारपालः - द्वारपाल, Get-keeper
अन्तः - भित्र, Inside
विना - बिना, Without
प्रार्थना - प्रार्थना, Prayer
कविता - कविता, Poetry
प्राकारः - पर्खाल, Wall
कर्मकरः - कामदार, Worker
खाद्यकम् - खाजा, Snack
पत्नी - पत्नी, Wife
पौत्रः - नाति, Grandson

काकः - काग, Crow
बकः - बकुल्लो, Cren
श्वानः - कुकुर, Dog
वृक्षरोपणम् - वृक्षरोपण, Planting
करण्डः - डोको, Wicker basket
सङ्गणकम् - कम्प्युटर, Computer
प्रार्थनासभा - प्रार्थनासभा, Assembly
सम्यक् - राम्रो, Good
सङ्गणककक्षः - कम्प्युटर ल्याब, Computer lab
वातावरणम् - वातावरण, Environment
वातावरणदिवसः - वातावरण दिवस, Environment day

## त्रयोदशः पाठः

# शिक्षा

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



पाठशालाम् प्रेषय प्रेषय ।
पाठय पुत्रीम् पुत्रम् पाठय ।
पुत्रीपुत्रौ लब्ध्वा शिक्षाम् ।
कुरुतः सुकराम् जीवनयात्राम् ।

शिक्षितः पुत्रः शिक्षयति पौत्रम् ।
शिक्षिता पुत्री शिक्षयति पौत्रीम् ।
शिक्षिता पुत्री शिक्षितः पुत्रः ।
ताभ्याम् प्रचलत्ययम् लोकः ।

विद्यालयमा पठाउनुहोस् पठाउनुहोस् । छोराछोरीलाई पढाउनुहोस्, पठाउनुहोस् । छोराछोरी शिक्षा पाएर सजिलै जीवनको यात्रा गर्छन् । शिक्षित छोराले नातिलाई शिक्षित बनाउँछ । शिक्षित छोरीले नातिनीलाई शिक्षित बनाउँछिन् । शिक्षित छोरी र छोराद्वारा संसार चल्छ ।

## २. चित्रम् विलोक्य वर्णयत *(चित्र हेरी वर्णन गर्नुहोस्)*



## ३. चित्रम् विलोक्य कोष्ठकस्य शब्दानम् प्रयोगेण रिक्तस्थानम् पूरयत *(चित्र हेरी कोठाका शब्द प्रयोग गरेर खाली ठाउँ भर्नुहोस्)*



| कक्षाकोष्ठः, उत्तिष्ठति, प्रश्नम्, प्रसन्ना, यच्छति, सा, प्रसन्नः |
|---|

अयम् ------------ अस्ति । शिक्षिका ------------ पृच्छति । छात्रः ------------ । सः उत्तरम् ------------ । शिक्षिका ------------ भवति । ------------ तस्मै साधुवादम् यच्छति । छात्रः च ------------ भवति ।

यो कक्षाकोठा हो । शिक्षिका प्रश्न सोध्नुहुन्छ । विद्यार्थी उठ्छ । ऊ उत्तर दिन्छ । शिक्षिका खुसी हुनुहुन्छ । उहाँ विद्यार्थीलाई स्याबासी दिनुहुन्छ । विद्यार्थी पनि खुसी हुन्छ ।

## ४. चित्राणाम् नामानि कथयत *(चित्रका नाम भन्नुहोस्)*



लेखापालः



द्वारपालः



कवितावाचनम्



चत्वरः



विद्युद्व्यजनम्




भित्तिघटिका

५. उदाहरणम् अनुसृत्य वर्णसंयोजनेन शब्दान् निर्मात *(उदाहरणमा दिएजस्तै वर्ण जोडी शब्द बनाउनुहोस्)*

लेखापालः = ल् + ए + ख् + आ + प् + आ + ल् + अः

(क) द्वारपालः = ---------------------------------------------

(ख) कवितावाचनम् = ---------------------------------------------

(ग) चत्वरः = ---------------------------------------------

(घ) विद्युद्व्यजनम् = ---------------------------------------------

(ङ) भित्तिघटिका = ---------------------------------------------

६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

धरित्री



विद्युद्व्यजनम्



तीरम्




शृगालः



चिल्लः



भित्तिघटिका



## ७. कथाम् पठत *(कथा पढ्नुहोस्)*

कनकावतीनगर्याः मध्यभागे नर्मदा नदी आसीत् । नर्मदायाः तीरप्रस्थे पर्कटीवृक्षः आसीत् । वृक्षमूले एकः शृगालः वसति स्म । वृक्षस्य शाखायाम् एकः चिल्लः वसति स्म । तयोः शोभना मित्रता आसीत् ।



एकदा एका महिला नर्मदायाम् स्नात्वा वृक्षमूलम् आगच्छत् । सा तत्र जीमूतवाहनाय देवाय नैवेद्यम् अर्पयित्वा कथाम् च अवाचयत् । कथाम् श्रुत्वा चिल्ल-शृगालौ च उपवासम् कर्तुम् ऐच्छताम् । तस्याम् रात्रौ नर्मदातीरे एकस्य व्यापारिणः पुत्रस्य दाहसंस्कारः अभवत् । देहस्य अधिकांशस्य भागस्य दहनानन्तरम् शवयात्रिणः गृहम् प्रत्यगच्छन् । शृगालस्य मनसि मांसभक्षणस्य इच्छा जागरिता । शृगालः चिल्लम् असूचयित्वा एकाकी गत्वा मांसम् अखादत्, किञ्चित् च गोपयित्वा अस्थापयत् ।

अपरे जन्मनि द्वयोः एव जन्म ब्राहमणस्य गृहे स्त्रीरूपेण अभवत् । चिल्लः शिलावती शृगालः च कर्पूरावती अभवताम् । ज्येष्ठायाः शिलावत्याः विवाहः धनिना जनेन सह सम्पन्नः । कनिष्ठायाः कर्पूरवत्याः च विवाहः राज्ञा सह अभवत् । शिलावत्याः सप्त पुत्राः अजायन्त । कर्पूरावत्याः एकः पुत्रः जातः, सः च मृतः । कालक्रमेण राज्ञा सह शोभनः सम्बन्धः अशोभनः अभवत् । तदानीम् शिलावती पूर्वजन्मनः व्रतभङ्गस्य घटनाम् भगिनीम् अस्मारयत् । व्रतभङ्गस्य कारणेन एव तस्याः शिशुः मृतः आसीत् । थारुसमुदायः अद्यत्वे च एतत् व्रतम् आचरति । 'जितियापर्व' इति नाम्ना व्रतोत्सवस्य प्रसिद्धिः जाता वर्तते ।

कनकावती सहरको बिचमा नर्मदा नदी थियो । नर्मदाको डिलमा पाकरी नामको रुख थियो । रुखको फेदमा एउटा स्याल बस्थ्यो । रुखको हाँगामा एउटा चिल बस्थ्यो । उनीहरूको राम्रो मित्रता थियो ।

एक दिन एउटी महिला नर्मदामा नुहाएर रुखको फेदमा आइन् । उनले त्यहाँ जीमूतवाहन देवतालाई नैवेद्य चढाई कथा भनिन् । कथा सुनेर चिल र स्यालले पनि उपवास गर्ने इच्छा गरे । त्यस रात नर्मदाको तीरमा एउटा व्यापारीको छोराको दाहसंस्कार भयो । शरीरको अधिकांश भाग जलेपछि मलामीहरू घर फर्किए । स्यालको मनमा मासु खाने इच्छा जाग्यो । स्यालले चिललाई खबरै नगरी एक्लै गएर मासु खायो, केही मासु लुकाएर पनि राख्यो ।

अर्को जन्ममा दुवैको जन्म ब्राह्मणका घरमा छोरीका रूपमा भयो । चिल शिलावती र स्याल कर्पूरावती भए । जेठी शिलावतीको विवाह धनी मानिससँग भयो । कान्छी कर्पूरावतीको विवाह चाहिँ राजासँग भयो । शिलावतीका सात छोरा जन्मिए । कर्पूरावतीको एउटा छोरो जन्मियो र त्यो पनि मऱ्यो । कालक्रमले राजासँग राम्रो सम्बन्ध रहेन । त्यस बेला शिलावतीले बहिनीलाई पूर्वजन्मको व्रतभङ्गको घटना सम्झाइन् । व्रतभङ्गका कारणले नै उनको शिशु मरेको थियो । थारु समुदाय आजकल पनि यो व्रत लिन्छ । यो व्रत ‘जितियापर्व’ नामले प्रसिद्ध छ ।

८. अनुच्छेदम् श्रुत्वा प्रश्नानाम् उचितोत्तरे (√) चिह्नम् योजयत *(अनुच्छेद सुनेर प्रश्नको सही उत्तरमा (√) चिह्न लगाउनुहोस्)*



अद्य श्रीपञ्चमी अस्ति । अद्य विद्यालये कार्यक्रमः भविष्यति । तत्र वयम् सरस्वतीपूजनम् करिष्यामः । सरस्वती विद्यायाः अधिष्ठात्री देवी अस्ति । तस्याः पूजनेन विद्यायाः अभ्यासेन च सा प्रसन्ना भविष्यति । तस्याः प्रसादेन वयम् विद्यावन्तः भविष्यामः ।

(क) श्रीपञ्चमी कदा अस्ति ?

(अ) अद्य (आ) श्वः (इ) ह्यः

(ख) अद्य विद्यालये किम् भविष्यति ?

(अ) वर्षा (आ) भ्रमणम् (इ) कार्यक्रमः

(ग) विद्यायाः अधिष्ठात्री देवी का अस्ति ?

(अ) काली (आ) लक्ष्मीः (इ) सरस्वती

(घ) कस्याः प्रसादेन वयम् विद्यावन्तः भविष्यामः ?

(अ) देव्याः (आ) सरस्वत्याः (इ) महिष्याः

आज श्रीपञ्चमी हो । आज विद्यालयमा कार्यक्रम हुने छ । त्यहाँ हामी सरस्वतीको पूजन गर्ने छौँ । सरस्वती विद्याकी अधिष्ठात्री देवी हुनुहुन्छ । पूजन र विद्याको अभ्यासले उहाँ खुसी हुनुहुने छ । उहाँ खुसी भएपछि हामी विद्यावान् हुने छौँ ।

## ९. रङ्गम् भरित्वा चित्रस्य नाम लिखत *(रङ भरी चित्रको नाम लेख्नुहोस्)*



इयम् ------------------------------------------ अस्ति ।

## १०. शिक्षकस्य सहयोगेन श्रुतिलेखनम् कुरुत *(शिक्षकको सहयोगमा श्रुतिलेखन गर्नुहोस्)*

शिक्षा, धरित्री, प्रचलति, शिक्षयति, पौत्री, लेखापालः, चत्वरः, भित्तिघटिका, मूलद्वारम्, विद्युद्व्यजनम्, चिल्लः, शृगालः, प्रार्थनासभा

## ११. चित्रम् विलोक्य वर्णयत *(चित्र हेरी वर्णन गर्नुहोस्)*



पाठशाला - विद्यालय, School
व्यजनम् - पङ्खा, Fan
चत्वरः - चउर, Meadow
चिल्लः - चिल, Eagle
धरित्री - पृथ्वी, Earth
पुत्री - छोरी, Daughter
पुत्रः - छोरा, Son
लोकः - संसार, World
शिक्षा - शिक्षा, Education
शृगालः - स्याल, Jackal
शाखा - हाँगा, Branch
नदीतीरम् - नदीको किनार, Riverbank
सुकरा - सजिलो, Easy
लेखापालः - लेखापाल, Accountant
प्रसन्नः/प्रसन्ना - खुसी, Happy
शिक्षितः/शिक्षिता - शिक्षाप्राप्त, Educated
पौत्री - नातिनी, Grand daughter
कक्षाकोष्ठः - कक्षाकोठा, Class-room
भित्तिघटिका - भित्ते घडी, Wall watch
जीवनयात्रा - जीवनको यात्रा, Journey of life

## चतुर्दशः पाठः

# सर्वसुन्दरम्

१. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

शीतम् सलिलम् प्रवहति नद्याम्
शशकः धाव ति शीघ्रम् शीघ्रम्
'म्याउँ म्याउँ' नित्यम् वदति बिडालः
वसति अरण्ये दुष्टशृगालः ॥



नीलम् गगनम्, हरिता भूमिः
पारावारे नृत्यति ऊर्मिः
फुल्लति पुष्पम्, सरति सुगन्धः
उष्णः सूर्यः, शीतः चन्द्रः ॥

मेघः गर्जति वर्षायामे
वायुः विहरति पुष्पोद्याने
कोकिलगीतम् मधुरम् मधुरम्
मम प्रियमित्रम् पर्यावरणम् ॥

नदीमा चिसो पानी बग्छ । खरायो चाँडो चाँडो दौडिन्छ । बिरालो सधैँ 'म्याउँ म्याउँ' गर्छ । दुष्ट स्याल वनमा बस्छ ।

आकाश निलो छ । पृथिवी हरियो छ । तलाउमा छाल छचल्किन्छ । फूल फुल्छ अनि सुगन्ध फैलिन्छ । सूर्य तातो हुन्छ । चन्द्रमा चिसो हुन्छ ।

वर्षाकालमा मेघ गर्जन्छ । फूलबारीमा हावा चल्छ । कोइलीको गीत मिठो छ । पर्यावरण मेरो प्यारो साथी हो ।

२. रिक्तस्थाने धातोः उपयुक्तम् रूपम् लिखत *(खाली ठाउँमा धातुको उपयुक्त रूप लेख्नुहोस्)*

| | | | |
|---|---|---|---|
| पठ् - | पठति | अपठत् | पठिष्यति |
| हस् - | हसति | ------------ | ------------ |
| कूज् - | कूजति | ------------ | ------------ |
| वद् - | वदति | ------------ | ------------ |
| धाव् - | धावति | ------------ | ------------ |

३. चित्रम् दृष्ट्वा रिक्तस्थानम् पूरयत *(चित्र हेरेर खाली ठाउँ भर्नुहोस्)*



कासारः, वृक्षाः, सुन्दरम्, वानराः, चञ्चलाः, त्रयः, पश्यति

चित्रे ------------ अस्ति। वनम् ------------ अस्ति। वने ------------ सन्ति। तत्र चत्वारः ------------ सन्ति। वानराः ------------ सन्ति। वनस्य मध्ये ------------ अस्ति। कासारे ------------ मत्स्याः सन्ति। भेकः मत्स्यान् ------------ ।

चित्रमा वन छ। वन राम्रो छ। वनमा रुखहरू छन्। यहाँ चारओटा वानर छन्। वानरहरू चकचके छन्। वनको बिचमा तलाउ छ। तलाउमा तीनओटा माछा छन्। भ्यागुता माछाहरूलाई हेर्छ।

## ४. पठत, संयुक्ताक्षरम् रेखया परिवेष्टयत च *(पढ्नुहोस् र संयुक्त अक्षरमा गोलो घेरा लगाउनुहोस्)*


प(ङ्क)जः


शङ्खः


पतङ्गिका


भृङ्गः


जङ्गलम्


कुरङ्गः

## ५. उदाहरणम् अनुसृत्य शब्दान् निर्मात *(उदाहरण हेरी शब्द बनाउनुहोस्)*

का → कः ← पि; भे → कः; शु → कः

ना → गः ← न; मृ → गः; ख → गः

भृ → ङ्गः ← शृ; तु → ङ्गः; भ → ङ्गः

| | | | | | |
|---|---|---|---|---|---|
| काकः | पिकः | ------------ | ------------ | ------------ | ------------ |
| ------------ | ------------ | ------------ | ------------ | ------------ | ------------ |

## ६. कोष्ठकात जन्तूनाम लिखत *(कोष्ठकबाट जनावरको नाम लेख्नुहोस्)*

| भल्लूकः, श्वानः, महिषी, सिंहः, अजा, गजः |
|---|


(क) -----------------


(ख) -----------------


(ग) -----------------


(घ) -----------------


(ङ) -----------------


(च) -----------------

## ७. लयम् अनुसृत्य वाचयत *(लय मिलाई वाचन गर्नुहोस्)*

दशकूपसमा वापी दशवापीसमो ह्रदः ।
दशह्रदसमः पुत्रो दशपुत्रसमो द्रुमः ॥

तुलसीगन्धमादाय यत्र गच्छति मारुतः ।
दिशो दश पुनात्याशु भूतग्रामांश्चतुर्विधान् ॥

दशओटा कुवा जस्तो एउटा पोखरी हुन्छ । दशओटा पोखरीजस्तो एउटा तलाउ हुन्छ । दशओटा तलाउ जस्तो एउटा छोरो हुन्छ, दश छोरा जस्तो एउटा रुख हुन्छ ।

तुलसीको गन्ध मिसिएको हावा जहाँ बहन्छ, त्यस ठाउँका दश दिशा पवित्र हुन्छन् । त्यहाँ सबै प्राणीहरू पनि स्वस्थ हुन्छन् ।

## ८. अनुच्छेदम् पठित्वा उत्तरम् लिखत *(अनुच्छेद पढ्नुहोस् र उत्तर लेख्नुहोस्)*

अस्माकम् देशस्य पर्यावरणम् सुन्दरम् अस्ति । उत्तरे हिमालयः अस्ति । तत्र अधिकम् शैत्यम् भवति । हिमालयात् अनेकाः नद्यः प्रवहन्ति । कौशिकी, गण्डकी, नारायणी, कर्णाली, त्रिशूली चेत्याद्याः नेपालस्य प्रमुखाः नद्यः सन्ति । तासु निर्मलम् जलम् वहति । तत्र मत्स्याः, ग्राहाः अन्ये जलजन्तवः च वसन्ति । पर्वत क्षेत्रे हरितानि वनानि सन्ति । वनेषु बहुविधाः वृक्षाः, वनस्पतयः, ओषधयः च सन्ति । तत्र बहवः पशवः निवसन्ति । मृगाः नृत्यन्ति, कोकिलाः कूजन्ति, पतङ्गिकाः



भ्रमन्ति, शशकाः उत्प्लवन्ते । वने मधुराणि फलानि फलन्ति, सुन्दराणि पुष्पाणि च फुल्लन्ति । तराईक्षेत्रे घनानि वनानि सन्ति । तत्र गजाः, व्याघ्राः, गण्डकाः, वराहाः चेत्यादयः जन्तवः वसन्ति । अत्र विशालानि क्षेत्राणि सन्ति । क्षेत्रेषु बहु अन्नम् फलति । अतः तराईप्रदेशः अन्नभाण्डागारः इति उच्यते । उत्तरस्य सुन्दरैः हिमालयैः, मध्यस्य हरितैः पर्वतैः, दक्षिणस्य च विशालैः क्षेत्रैः सुशोभितः अस्माकम् देशः सुन्दरः अस्ति ।

(क) नेपालस्य कस्मिन् भागे हिमालयः वर्तते ?

(अ) मध्यभागे (आ) दक्षिणभागे (इ) उत्तरभागे

(ख) नद्यः कुतः प्रवहन्ति ?

(अ) वनात् (आ) हिमालयात् (इ) गगनात्

(ग) मृगाः किम् कुर्वन्ति ?

(अ) नृत्यन्ति (आ) धावन्ति (इ) कूजन्ति

(घ) वने कीदृशानि फलानि फलन्ति ?

(अ) सुन्दराणि (आ) मधुराणि (इ) घनानि

(ङ) अन्नभाण्डागारः कः ?

(अ) हिमालयप्रदेशः (आ) तराईप्रदेशः (इ) पर्वतीयप्रदेशः

हाम्रो देशको वातावरण सुन्दर छ । यसको उत्तरमा हिमाल छ । त्यहाँ धेरै जाडो हुन्छ । हिमालयबाट धेरै नदीहरू बग्छन् । कोशी, गण्डकी, नारायणी, कर्णाली, त्रिशूली आदि प्रमुख नदीहरू छन् । त्यहाँ स्वच्छ पानी बग्छ । त्यहाँ माछा, गोहीजस्ता जलचर जन्तुहरू बस्छन् । पहाडमा हरिया वनहरू छन् । वनमा धेरै रुख, बिरुवा अनि औषधीहरू छन् । त्यहाँ धेरै पशुहरू बस्छन् । मृगहरू नाच्दछन्, कोइलीहरू गीत गाउँछन्, पुतलीहरू घुम्दछन्, खरायोहरू उफ्रिन्छन् । वनमा मिठा फल फल्दछन्, सुन्दर फूलहरू फुल्छन् । तराईमा घना वन छ । त्यहाँ हात्ती, बाघ, गैंडा, बँदेल आदि जन्तुहरू बस्छन् । यहाँ विशाल खेत छ । खेतमा धेरै अन्न फल्छ । त्यसैले तराईलाई अन्नको भण्डार भनिन्छ । उत्तरका सुन्दर हिमालले, पहाडका हरिया पर्वतले र दक्षिणका विशाल समथर भूभागले शोभित हाम्रो देश सुन्दर छ ।

## ९. कोष्ठकात् शब्दम् विचित्य रिक्तस्थानम् पूरयत *(कोष्ठबाट शब्द छानी खाली ठाउँ भर्नुहोस्)*



| |
|---|
| प्रसन्नाः, ताराः, आकाशे, चन्द्रम्, रमते, शीतलः, पूर्णिमायाम्, |

------------ चन्द्रः उदेति । चन्द्रस्य समीपे ------------ भवन्ति । चन्द्रस्य प्रकाशः ------------ भवति । माता अनुजम् ------------ दर्शयति । अनुजः चन्द्रम् दृष्ट्वा ------------ । अहम् अपि ------------ चन्द्रम् पश्यामि । चन्द्रम् दृष्टवा सर्वे ------------ भवन्ति ।

| |
|---|
| आकाशमा चन्द्रमा उदाउँछ । चन्द्रमाका नजिक ताराहरू छन् । चन्द्रमाको प्रकाश शीतल हुन्छ । आमा भाइलाई चन्द्रमा देखाउनुहुन्छ । भाइ चन्द्रमालाई देखेर रमाउँछ । म पनि पूर्णिमामा चन्द्रमा हेर्छु । चन्द्रमा देखेर सबै खुसी हुन्छन् । |

शशकः - खरायो, Rabbit
नित्यम् - सधैं, Always
गगनम् - आकाश, Sky
पुष्पम् - फूल, Flower
ऊर्मिः - छाल, Wave
सूर्यः - सूर्य, Sun
पर्यावरणम् - वातावरण, Environment
कासारः - पोखरी, Pond
वानरः - बाँदर, Monkey
मत्स्यः - माछो, Fish

भेकः - भ्यागुतो, Frog
पतङ्गिका - पुत्तली, Butterfly
कूपः - कुवा, Well
चन्द्रः - चन्द्रमा, Moon
मेघः - बादल, Cloud
वायुः - हावा, Air
मधुरम् - मिठो, Sweet
पुत्रः - छोरो, Son
द्रुमः - रुख, Tree
मारुतः - हावा, Air

भाण्डागारः - भण्डार, Store
शावकः - बच्चा, Baby
क्षेत्रम् - खेत, Farmland
पूर्णिमा - पूर्णिमा तिथि, Full moon day
अनुजः - भाइ, Younger brother
शीतम् - चिसो, Cold
गर्जति - कराउँछ, Roars
नृत्यति - नाच्छ, Dances
पारावारम् - दुवै किनार, Both banks of the river

पञ्चदशः पाठः

# कीटगणः

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



मधुमक्षिके ! मधुमक्षिके !
कुरुषे कथम् मधुसञ्चयम् ?
कुसुमम् भवेत् गहने वने ।
अयि गच्छ भो ! भ्रम निर्भयम् ॥

मधुमक्षिके ! मधुमक्षिके !
मधुरम् रवम् कुरुषे कथम् ?
सखि ! सन्ततम् वस मद्गृहे ।
तव गीतिकाञ्च शृणोम्यहम् ॥

मधुमक्षिके ! मधुमक्षिके !
अयि ! मित्रताम् कुरुषे कथम् ?
सह तिष्ठ मे सुखदुःखयोः ।
सखि ! माम् च शिक्षय मेलनम् ॥

हे मौरी ! हे मौरी ! कसरी मह जम्मा गर्छौ ? घनघोर वनमा फूल होला, तिमी त्यहाँ जाऊ अनि नडराईकन डुल ।

हे मौरी ! हे मौरी ! मधुर आवाज कसरी निकाल्छौ ? हे साथी ! सधैँ मेरो घरमा बस । म सधैँ तिम्रो गीत सुन्छु ।

हे मौरी ! हे मौरी ! भन न कसरी मित्रता गर्छौ ? तिमी सुख र दुःखमा मसँगै बस । हे साथी ! मलाई मेलमिलापको शिक्षा देऊ ।

२. उदाहरणम् विलोक्य रिक्तस्थाने समुचितम् वाक्यम् लिखत *(उदाहरण हेरी खाली ठाउँमा सुहाउँदो वाक्य लेख्नुहोस्)*

| | | |
|---|---|---|
| पुष्पम् फुल्लति । | पुष्पे फुल्लतः । | पुष्पाणि फुल्लन्ति । |
| फलम् फलति । | ---------------------------- | ---------------------------- । |
| ---------------------------- । | पत्रे पततः । | ---------------------------- । |
| ---------------------------- | ---------------------------- | जलानि वहन्ति । |
| ---------------------------- | उद्याने स्तः । | ---------------------------- । |

३. चित्रम् विलोक्य समुचितशब्दस्य चयनेन रिक्तस्थानम् पूरयत *(चित्र हेरी मिल्ने शब्द छानेर खाली ठाउँ भर्नुहोस्)*



हिमालयः ------------ (सुन्दरः, मधुरः) अस्ति । हिमालयात् ------------ (नदी, वनम्) प्रवहति । नद्याः तीरे ------------ (पुष्पाणि, फलानि) फुल्लन्ति । पुष्पेषु ------------ (मधुमक्षिकाः, पिपीलिकाः) भ्रमन्ति । पुष्पाणाम् रसः ------------ (मधुरः, तिक्तः) भवति । रसम् आदाय मधुमक्षिकाः ------------ (मधु, दधि) निर्मान्ति । पतङ्गिका ------------ (मधुमक्षिकायाः, पुष्पस्य) सखी अस्ति । सा अपि ------------ (उद्याने, नद्याम्) विहरति ।

हिमाल राम्रो छ । हिमालबाट नदी बग्छ । नदीको तीरमा फूल फुल्छन् । फूलमा मौरी घुम्छन् । फूलको रस मिठो हुन्छ । रस लिएर मौरीले मह बनाउँछन् । पुतली मौरीको साथी हो । त्यो पनि बगैंचामा घुम्छ ।

## ४. चित्रम् विलोक्य शब्दम् उच्चारयत *(चित्र हेर्नुहोस् र शब्दको उच्चारण गर्नुहोस्)*



मधुमक्षिका



पिपीलिका



पतङ्गिका



भ्रमरः



दंशः



मशकः

## ५. उदाहरणानुसारेण शब्दान् अन्विष्य रेखया परिवेष्टयत *(उदाहरण हेरी शब्द खोजेर गोलो घेरा लगाउनुहोस्)*

| | | | | | |
|---|---|---|---|---|---|
| म | धु | म | क्षि | का | प |
| श | पि | व | र | सः | त |
| कः | हि | पी | वृ | क्षः | ङ्गि |
| मि | मा | म | लि | क्षा | का |
| दं | ल | धु | मः | का | सा |
| शः | यः | रः | भ्र | म | रः |

## ६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

मेघः



वनम्



तडागः



हिमालयः



वृक्षः



आकाशः



हिमम्



नदी



## ७. द्रुतम पठत *(छिटो छिटो पढ्नुहोस्)*

जलस्थाः मीनाः

वनस्थाः पादपाः

गगनस्थाः ताराः

वृक्षस्थाः सुमनसः

देवालयस्थाः देवाः

विद्यालयस्थाः बालाः

भवन्ति शोभाजनकाः

नेत्रोत्सवजनकाः ॥



माछाहरू पानीमा बस्छन् । रुखहरू वनमा हुन्छन् । ताराहरू आकाशमा हुन्छन् । फूलहरू रुखमा हुन्छन् । देवताहरू मन्दिरमा हुन्छन् । बालकहरू विद्यालयमा हुन्छन् । यिनीहरू राम्रा हुन्छन् । यी सबैलाई हेर्दा आँखालाई आनन्द आउँछ ।

## ८. अनुच्छेदम् पठत, समुचितशब्देन रिक्तस्थानम् पूरयत च *(अनुच्छेद पढ्नुहोस् र उपयुक्त शब्द राखी खाली ठाउँ भर्नुहोस्)*

अस्माकम् पुरतः बहूनि वस्तूनि सन्ति । मृत्तिका, पाषाणः, वायुः इत्यदीनि वस्तूनि मानवस्य जीवने अत्यावश्यकानि सन्ति । तथैव जलम्, स्थलम्, नभः च उपयोगिनि भवन्ति ।

मृत्तिका अस्ति, पाषणः अस्ति । मृत्तिकया पाषाणेन च वयम् गृहम् निर्मामः । जलम् अस्ति, स्थलम् अस्ति । वयम् जलम् पिबामः । वयम् स्थले विचरामः । वायुः अस्ति, आकाशः अस्ति । आकाशे वायुः वहति । वायुना वयम् जीवामः । हिमालयः अस्ति, नदी अस्ति, नदी हिमालयाद वहति । नद्याम् जलम् भवति । वृक्षः अस्ति कासारः अस्ति । वृक्षः कासारात् जलम् गृह्णाति वृक्षः प्राणवायुम् प्रसारयति । तडागः अस्ति । निर्झरः अस्ति । तडागेन निर्झरेण च प्रकृतिः शोभना भवति । एतैः प्रकृतिः शोभिता अस्ति । एतेषाम् प्रयोगेण मानवस्य जीवनम् सञ्चलति ।

दूषितम् जलम् पीत्वा मानवः रुग्णः भवति । तथा एव दूषितेन वायुना अपि अनेके रोगाः



वर्धन्ते । मन्त्राणि उच्चध्वनिम् निःसारयन्ति । तेन अस्माकम् मानसिकम् स्वास्थ्यम् विकृतम् भवति । दूषितायाम् मृत्तिकायाम् अन्नम् न फलति । अन्नेन बिना मानवस्य जीवनम् कष्टपूर्णम् भवति । पर्यावरणेन विना जीवनम् न सम्भवति । अतः पर्यावरणस्य रक्षा कर्तव्या । जलस्य, वायोः, ध्वनेः, मृत्तिकायाः च स्वच्छतायै प्रयासः करणीयः ।

हाम्रो वरिपरि धेरै वस्तु छन् । ढुङ्गो, माटो, हावा, पानी, जमिन, आकाश आदि वस्तु मान्छेको जीवनमा उपयोगी हुन्छन् । त्यसै गरी बिरुवा, नदी, तलाउ, झरना आदिले प्रकृति सुशोभित छ । यी पदार्थहरूको प्रयोग गरेर मानिसको जीवन चल्छ ।

प्रदूषित पानी पिएर मानिस रोगी हुन्छ । त्यसैगरी प्रदूषित हावाले पनि धेरै रोग बढ्दछन् । मन्त्रहरू ठुलो आवाज निकाल्छन् । त्यसले हाम्रो मानसिक स्वास्थ्य बिग्रन्छ । दूषित माटामा अन्न फल्दैन । अन्नबिना मानवको जीवन कष्टपूर्ण हुन्छ ।

वातावरणबिना जीवन सम्भव हुँदैन । त्यसैले वातावरणको रक्षा गर्नुपर्दछ । पानी, हावा, आवाज र माटाको स्वच्छताका लागि प्रयास गर्नुपर्दछ ।

(क) मृत्तिकया -------------------- च वयम् गृहम् निर्मामः ।

(ख) -------------------- वायुः प्रवहति ।

(ग) -------------------- मानवस्य जीवने उपयोगीनि सन्ति ।

(घ) वनस्पतिः, नदी, तडागः, निर्झरः इत्यादिभिः -------------------- अस्ति ।

(ङ) -------------------- मानवः रुग्णः भवति ।

(च) मन्त्राणि -------------------- निःसारयन्ति ।

(छ) जलस्य, वायोः, -------------------- प्रयासः करणीयः ।

## ९. उपयुक्तम् रङ्गम् योजयत *(सुहाउँदो रङ भर्नुहोस्)*





| | | |
|---|---|---|
| **मधुमक्षिके !** - हे मौरी, O bee | **पिपीलिका** - कमिलो, Ant | **बालाः** - बालकहरू, Children |
| **कुसुमम्** - फूल, Flower | **मशकः** - लामखुट्टे, Mosquito | **परितः** - वरिपरि, Around |
| **रवम्** - आवाज, Voice | **दंशः** - डाँस, Gadly | **पाषाणः** - ढुङ्गो, Stone |
| **मेलनम्** - मेलमिलाप, Reconciliation | **वृक्षः** - रुख, Tree | **जलम्** - पानी, Water |
| **सुखदुःखयोः** - सुख र दुःखको, Of happiness and sorrow | **हिमम्** - हिउँ, Snow | **निर्झरः** - झरना, Waterfall |
| | **आकाशः** - आकाश, Sky | **मृत्तिका** - माटो, Soil |
| **नदी** - नदी, River | **मीनः** - माछो, Fish | **ध्वनिः** - आवाज, Sound |
| **रसः** - रस, Juice | **वृक्षस्थाः** - रुखमा बसेका, Living in a tree | **विहरति** - घुम्छ, Visit |

षोडशः पाठः

# वनमैत्री

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



गहने विपिने विचरति सिंहः
प्लवते नद्याम् चञ्चलमत्स्यः
अश्वः मार्गे धावति शीघ्रम्
हंसः गच्छति मन्दम् मन्दम् ॥

'म्याउँ म्याउँ' करोति यत्र बिडालः
चूँ चूँ क्रन्दति मूषकराजः
गगने का का क्रोशति काकः
कुञ्जे गायति कोकिलराजः ॥



हरिणः खादति हरितम् घासम्
'बाँ बाँ' वत्सः गायति गीतम्
महिषी यच्छति दुग्धम् अधिकम्
उच्चैः बुक्कति श्वानः सततम् ॥

घना वनमा सिंह हिँड्छ । चकचके माछो नदीमा पौडिन्छ । घोडा बाटामा छिटो छिटो कुद्छ । हाँस बिस्तारै हिँड्छ । बिरालो म्याउँ म्याउँ गर्छ । मुसाको राजा चुँ चुँ गर्छ । आकाशमा काग का का गर्छ । कोइलीको राजा कुञ्जमा कराउँछ । हरिण हरियो घाँस खान्छ । बाच्छो बाँ बाँ गर्दै कराउँछ । भैँसीले धेरै दुध दिन्छ । कुकुर ठुलो स्वरले सधैँ कराउँछ ।

२. चित्रम् विलोकयत, कथाम् प्रपूर्य उपयुक्तम् शीर्षकम् च दत्त *(चित्र हेरेर कथा पूरा गरी मिल्ने शीर्षक दिनुहोस्)*



| शाखायाम्, शिशुः, गृहम्, वृक्षः, मुखे, प्रसन्नः, आहारम्, बहिः |
|---|

वने एकः ------------ अस्ति । वृक्षस्य ------------ नीडम् अस्ति । नीडम् चटकस्य ------------ अस्ति । चटकस्य एकः ------------ अस्ति । चटकः दिवसे नीडाद् ------------ गच्छति । दूरम् गत्वा सः ------------ आनयति । आहारम् आनीय सः शिशोः ------------ निदधाति । आहारम् प्राप्य शिशुः ------------ भवति ।

| वनमा एउटा रुख छ । रुखको हाँगामा गुँड छ । गुँड भँगेराको घर हो । भँगेराको एउटा बच्चो छ । भँगेरो दिउँसो गुँडबाट बाहिर जान्छ । टाढा गएर चारो ल्याउँछ । चारो ल्याएर बच्चाको मुखमा हालिदिन्छ । चारो पाएर बच्चा खुसी हुन्छ । |
|---|

३. चित्रम् विलोक्य नाम कथयत *(चित्र हेरी नाम भन्नुहोस्)*



हंसः



गृध्रः



शुकः



बकः



गरुडः



जतुका

४. रिक्तस्थाने उपयुक्तम् अक्षरम् भरित्वा पक्षिणः नाम लिखत *(खाली ठाउँमा उपयुक्त अक्षर भरेर चराको नाम लेख्नुहोस्)*

कपोतः, उलूकः, चकोरः, कुक्कुटः, चटकः, कोकिलः, मयूरः




५. चित्रम् विलोक्य शब्दानाम् शुद्धम् उच्चारणम् कुरुत *(चित्र हेरी शब्दहरूको शुद्ध उच्चारण गर्नुहोस्)*


उष्ट्रः


व्याघ्रः


गह्वरम्


गण्डकः


दंष्ट्री


प्लवङ्गः

६. शुद्धम् पठत *(शुद्धसँग पढ्नुहोस्)*

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥

| |
|---|
| बकुल्लाको जसरी चिन्तन गर्नुपर्छ । सिंहको जस्तो पराक्रम गर्नुपर्छ । ब्वाँसोले जस्तै अवसरको सदुपयोग गर्नुपर्छ । बाणले झैं लक्ष्य प्राप्त गर्नुपर्छ । |

## ७. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

कच्छपः



खगः



मत्स्यः



गोष्ठम्



व्याघ्रः



नीडम्



महिषी



गुहा



## ८. अनुच्छेदम् पठित्वा उत्तरम् लिखत *(अनुच्छेद पढेर उत्तर लेख्नुहोस्)*

धर्मवीरः राई भोजपुरमण्डलस्य गोगनेग्रामे वसति । तस्य पिता सन्तवीरः कृषिकर्मणा जीविकाम् निर्वहति । तस्य गृहे पशवः अपि पालिताः सन्ति । पशूनाम् निवासाय गोष्ठम् निर्मितम् अस्ति । गोष्ठे त्रयः गावः सन्ति, द्वौ वत्सौ स्तः, द्वौ वृषभौ स्तः, एका महिषी अस्ति, पञ्च अजाः सन्ति, बहवः कुक्कुटाः अपि सन्ति । कुक्कुटानाम् रक्षणाय कुक्कुरः अपि पालितः अस्ति । कुक्कुरः शृगालात् कुक्कुटान् रक्षति । सन्तवीरः दिवा अजान् वनेम् नीत्वा चारयति । वने व्याघ्रः अपि इतस्ततः विचरति । सन्तवीरः दत्तचित्तः सन् अजान् व्याघ्रात् रक्षति । धर्मवीरस्य माता धनमाया अस्ति । सा



गवाम्, अजानाम्, वृषभाणाम्, महिष्याः च कृते क्षेत्राद् घासम् आनयति । ते क्षेत्रे धान्यादीनि अन्नानि उत्पादयन्ति । गृहे धान्यम् खादितुम् मूषकाः आगच्छन्ति । तेभ्यः धान्यम् रक्षितुम् एकः चतुरः बिडालः अपि पालितः अस्ति । सः महिष्याः दुग्धम् पिबति, मूषकात् अन्नानि च रक्षति ।

(क) धर्मवीरः राई कुत्र वसति ?

(अ) ग्रामे (आ) नगरे (इ) विदेशे

(ख) पशूनाम् पालनाय किम् निर्मितम् अस्ति ?

(अ) गृहम् (आ) गोष्ठम् (इ) मन्दिरम्

(ग) धर्मवीरस्य माता किम् करोति ?

(अ) नगरम् गच्छति (आ) छात्रान् पाठयति (इ) घासम् आनयति

(घ) कुक्कुरः कस्मात् कुक्कुटान् रक्षति ?

(अ) व्याघ्रात् (आ) श्येनात् (इ) शृगालात्

(ङ) बिडालः कीदृशः अस्ति ?

(अ) अलसः (आ) चतुरः (इ) स्वल्पः

धर्मवीर राई भोजपुर जिल्लाको गोगने गाउँमा बस्छन् । उनका पिता सन्तवीर खेतीपाती गरेर जीविका गर्छन् । उनका घरमा थेरै पशुहरू पालिएका छन् । पशुपालनका लागि गोठ बनाइएको छ । गोठमा तीनओटा गाई छन्, दुईओटा बाच्छा छन्, दुईओटा गोरु छन्, एउटा भैंसी छ, पाँचओटा बाख्रा छन्, धेरै कुखुराहरू पनि छन् । कुखुरालाई जोगाउनका लागि एउटा कुकुर पालिएको छ । त्यसले कुखुरालाई स्यालबाट जागाउँछ । सन्तवीर दिउँसो बाख्रा वनमा लगेर चराउँछन् । वनमा बाघ यताउता डुलिरहन्छ । सन्तवीर त्यसबाट बाख्रालाई जोगाउँछन् ।
धर्मवीरकी आमा धनमाया हुन् । उनी गाई, बाख्रा, गोरु र भैंसीका लागि खेतबाट घाँस ल्याउँछिन् । उनीहरू खेतमा अन्न फलाउँछन् । घरमा धान खानका लागि मुसाहरू आउँछन् । तिनीहरूबाट धान जोगाउन एउटा चलाख बिरालो पालिएको छ । त्यसले भैंसीको दुध खान्छ र मुसाबाट अन्न पनि जोगाउँछ ।

९. यथोदाहरणम् कोष्ठकात् शब्दम् विचित्य रिक्तस्थानम् पूरयत *(उदाहरण हेरी कोठाबाट शब्द छानेर खाली ठाउँ भर्नुहोस्)*

| | | |
|---|---|---|
| अजः घासम् खादति । | अजौ घासम् खादतः | अजाः घासम् खादन्ति । |
| व्याघ्रः वने विचरति । | ------------------------------- | व्याघ्राः वने विचरन्ति । |
| -------------------------------। | मत्स्यौ जले मज्जतः | -------------------------------। |
| सर्पः भूमौ सर्पति । | -------------------------------। | -------------------------------। |
| ------------------------------- | बिडालौ मूषकान् खादतः । | -------------------------------। |
| -------------------------------। | ------------------------------- | मूषकाः विले निवसन्ति । |

अश्वः - घोडा, Horse
सिंहः - सिंह, Lion
हंसः - हाँस, Duck
काकः - काग, Crow
कोकिलराजः - कोइली, Black cuckoo
वत्सः - बाच्छो, Calf
खादति - खान्छ, Eats
गीतम् - गीत, Song
महिषी - भैंसी, Buffalo
दुग्धम् - दुध, Milk
अधिकम् - धेरै, More
बुक्कति - भुक्छ, Barks
चटकः - भगेँरो, Sparrow
नीडम् - गुँड, Nest
शिशुः - बच्चो, Baby
गृहम् - घर, House
उष्ट्रः - उँट, Camel
गहवरम् - गुफा, Cave
गण्डकः - गैंडा, Rhino
दंष्ट्री - बँदेल, Boar
प्लवङ्गः - बाँदर, Monkey
गृध्रः - गिद्ध, Vulture
जतुका - चमेरो, Bat
शुकः - सुगा, Parrot
काकचेष्टा - कागको जस्तो चलाखी, Wisdom like a crow
श्वाननिद्रा - कुकुरको जस्तो निद्रा, Sleep like a dog
शरवत् - बाणजस्तै, Like an arrow
पशवः - पशुहरू, Animals
वृषभौ - दुई गोरु, Two oxen
कुक्कुटाः - कुखुरा, Chicken
मूषकः - मुसो, Rat
घासम् - घाँस, Grass
विलम् - दुलो, Hole

## सप्तदशः पाठः

# उद्यानशोभा

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

उद्यानम् उद्यानम्
उद्याने कुरु रमणम्
बालानाम् युवकानाम्
वृद्धानाम् तत्र भ्रमणम् ।

उद्यानम् उद्यानम्
उद्याने कुरु गमनम्
पुष्पाणाम् मृदु हसनम्
विहगानाम् खलु वसनम् ।

उद्यानम् उद्यानम्
उद्याने कुरु पठनम्
वेलायाः उपयोगे
शास्त्राणाम् कुरु मननम् ।



अहा ! बगैंचा । बगैंचामा रमाउने काम गर । बालक, युवक र वृद्धहरू बगैंचामा भ्रमण गर्छन् ।
अहा ! बगैंचा । बगैंचामा जाऊ । फूलहरूको हाँसो मिठो हुन्छ । त्यहाँ चराहरू बस्छन् ।
अहा ! बगैंचा । बगैंचामा गएर पढ । समयको उपयोग गरी शास्त्रहरूको मनन गर ।

## २. कथाम् पठत *(कथा पढ्नुहोस्)*

सुलता प्रजापतिः पाल्पामण्डले वसति स्म । सा द्वितीयायाम् कक्षायाम् पठति स्म । चित्रकलायाम् तस्याः अभिरुचिः आसीत् । सा सुन्दराणि चित्राणि निर्माति स्म । सा सुशीला आसीत् ।

एकदा सा चित्रम् निर्मातुम् सन्नद्धा आसीत् । तदा पितामहः तस्याः समीपम् आगच्छत् । सः अपृच्छत्, “पौत्रि ! किम् कुर्वन्ती असि ?” सुलता उदतरत्, “अहम् चित्रस्य रचनाम् कुर्वन्ती



अस्मि ।'' तत् श्रुत्वा पितामहः अवदत्, "एतेन जीवनस्य वृत्तिः न सम्भवति । त्वम् पठने मतिम् देहि ।'' एतत् आकर्ण्य सा खिन्ना अभवत् । ततः गृहे सा चित्रस्य रचनाम् न अकरोत् । विद्यालये तु समयम् निष्कास्य सा चित्राणि रचयति स्म ।

मासानन्तरम् चित्ररचनायाः प्रतियोगिता अभवत् । तस्याम् प्रतियोगितायाम् सुलता अपि सहभागिनी अभवत् । तत्र द्वितीयायाः कक्षायाः विद्यार्थिषु सा प्रथमम् स्थानम् अलभत । गृहे तस्मिन् विषये सा किमपि न अवदत् । अपरस्मिन् दिने पितामहः आकाशवाण्याम् समाचारम् शृण्वन् आसीत् । तत्र सः 'सुलता चित्ररचनाप्रतियोगितायाम् प्रथमम् स्थानम् अलभत' इति अशृणोत् । तस्मिन् एव समये प्रधानाध्यापकः तत्र प्राप्नोत् । सः पितामहम् पितरौ च वर्धापनम् कथयित्वा अवदत्, "सुलता प्रतिभाशालिनी अस्ति । एषा अस्माकम् विद्यालयस्य आभूषणम् वर्तते । एताम् प्राप्य वयम् गौरवम् कुर्मः ।" तत् श्रुत्वा पितामहः ग्लानिम् अन्वभवत् । सः सुलताम् अवदत्, "पौत्रि ! क्षमस्व माम् । प्रतिज्ञाम् च कुरु, त्वम् कदापि स्वरुचिम् न त्यजसि ।" पितामहस्य वचनम् श्रुत्वा सा च प्रसन्ना अभवत् । कालानन्तरम् सा प्रसिद्धा चित्रलेखिका अभवत् ।

सुलता प्रजापति पाल्पा जिल्लामा बस्थिन् । उनी दुई कक्षामा पढ्थिन् । चित्रकलामा उनको रुचि थियो । उनी राम्रा चित्र बनाउँथिन् । उनी असल थिइन् ।

एक दिन उनी चित्र बनाउन लागेकी थिइन् । त्यही बेला हजुरबुबा उनको नजिक आइपुग्नुभयो । उहाँले सोध्नुभयो, “नातिनी ! के गर्दै छौ ?” सुलताले उत्तर दिइन्, “म चित्र बनाउँदै छु ।” त्यो सुनेर हजुरबुबाले भन्नुभयो, “यसबाट जीवनको निर्वाह हुँदैन । तिमी पढ्नमा ध्यान देऊ ।” यस्तो सुनेर उनी खिन्न भइन् । त्यसपछि उनले घरमा चित्र बनाउन छोडिन् । विद्यालयमा चाहिँ समय निकालेर उनी चित्र बनाउँथिन् ।

एक महिनापछि चित्रकलाको प्रतियोगिता भयो । त्यस प्रतियोगितामा सुलता पनि सहभागी भइन् । त्यहाँ दुई कक्षाका विद्यार्थीहरूमध्ये उनले प्रथम स्थान प्राप्त गरिन् । घरमा त्यस विषयमा उनले केही भनिनन् । अर्को दिन हजुरबुबा रेडियोमा समाचार सुन्दै हुनुहुन्थ्यो । त्यहाँ उहाँले ‘सुलता चित्ररचनाको प्रतियोगितामा प्रथम भइन्’ भन्ने सुन्नुभयो । त्यही बेला प्रधानाध्यापक त्यहाँ आइपुग्नुभयो । उहाँले हजुरबुबा र बुबाआमालाई बधाई दिँदै भन्नुभयो, “सुलता प्रतिभाशाली छिन् । यिनी हाम्रो विद्यालयकी गहना हुन् । यिनलाई पाएर हामी गौरव गर्छौं ।” त्यो सुनेर हजुरबुबाले पछुतो मान्नुभयो । उहाँले सुलतालाई भन्नुभयो, “नातिनी ! मलाई क्षमा गर । आफ्नो रुचि छोड्दिनँ भनेर प्रतिज्ञा पनि गर ।” हजुरबुबाको कुरा सुनेर सुलता खुसी भइन् । पछि उनी प्रसिद्ध चित्रकार भइन् ।

३. कोष्ठकस्य साहाय्येन रिक्तस्थानम् पूरयत *(कोष्ठकको सहायताले खाली ठाउँ भर्नुहोस्)*



| सूर्यः, हिमालयाः, निर्झरः, वर्तन्ते, प्रकृतिः, पर्वताः |
|---|

................ सुन्दराः सन्ति । हिमालयानाम् उपरि ............. उदेति । अधोभागे ........... सन्ति । पर्वतमध्ये .......... प्रवहन् अस्ति । पर्वताः वृक्षैः हरिताः .......... । अत्रत्या .......... मनोरमा अस्ति ।

| हिमालहरू सुन्दर छन् । हिमालको माथि सूर्य उदाउँदै छ । तल्लो भागमा पहाडहरू छन् । पहाडका बिचमा झरना बगिरहेको छ । पहाडहरू रुखहरूले हरिया छन् । यहाँको प्रकृति रमाइलो छ । |
|---|

४. चित्रम् विलोक्य उदाहरणानुसारेण संयुक्तवर्णम् रेखया परिवेष्टयत *(चित्र हेरी दिइएजस्तै संयुक्त वर्णमा गोलो घेरा लगाउनुहोस्)*


मह(र्षिः)


राजर्षिः


देवर्षिः



वर्षम्


हर्षः


सप्तर्षयः

५. शब्दयोः मेलनम् कृत्वा नवीनशब्दम् निर्मात *(दुईओटा शब्द जोडी नयाँ शब्द बनाउनुहोस्)*

| नवीनशब्दः | शब्दः १ | शब्दः २ |
|---|---|---|
| कदापि | कदा | अपि |
| | प्रधान | अध्यापकः |
| | सदा | आप्नोति |

| | | | | | |
|---|---|---|---|---|---|
| मास | अनन्तरम् | रेखा | अङ्कनम् | छात्रा | अस्ति |

## ६. रेखाम् परिचित्य परस्परम् मेलयत *(रेखा चिनेर जोडा मिलाउनुहोस्)*

चक्रीयरेखा

नागवल्लीरेखा

ग्रन्थिरेखा

बिन्दुरेखा

समतलरेखा

ऊर्ध्वरेखा



## ७. अनुच्छेदम् पठित्वा उपयुक्तम् शीर्षकम् वदत *(अनुच्छेद पढी उपयुक्त शीर्षक भन्नुहोस्)*



मिथिलाक्षेत्रे मैथिली चित्रकला प्रसिद्धा अस्ति । सा चित्रकला मिथिलाम् परिचाययति । विशेषेण मैथिल्यः नार्यः उत्सवादिषु मौलिकम् चित्रम् रचयन्ति । ताः वस्तुषु, भित्तौ भूम्याम् वा चित्रम् रचयन्ति । रङ्गनिर्माणार्थम् ताः स्वस्थाने उपलब्धाः सामग्रीः प्रयुञ्जन्ति । ताः देवानाम्, मानवानाम्, पशुपक्षिणाम्, वृक्षाणाम्, फलानाम् च चित्रनिर्माणम् कुर्वन्ति ।

मिथिलाक्षेत्रमा मिथिला चित्रकला प्रसिद्ध छ । त्यस चित्रकलाले मिथिलालाई चिनाउँछ । विशेष गरी मैथिल नारीहरू उत्सव आदिमा मौलिक चित्र बनाउँछन् । उनीहरू सामानमा, भित्तामा अथवा भुइँमा चित्र कोर्छन् । रङ बनाउनका लागि उनीहरू आफ्नो ठाउँमा पाइने सामानको प्रयोग गर्छन् । उनीहरू देवीदेवता, मानिस, पशुपन्छी, रुख र फलहरूको चित्रनिर्माण गर्दछन् ।

## ८. अनुच्छेदम् पठित्वा पृष्टस्य प्रश्नस्य उचितोत्तरे (√) चिह्नम् योजयत *(अनुच्छेद पढी सोधिएका प्रश्नको सही उत्तरमा (√) चिह्न लगाउनुहोस्)*

बौद्धनाथः काष्ठमण्डपस्य पूर्वदिशि अवस्थितः वर्तते । एषः नेपालस्य विशालः अर्धगोलाकारः स्तूपः अस्ति । एतस्य निर्माणम् चतुर्दशशताब्द्याम् अभवत् । एषः युनेस्कोसंस्थायाः विश्वसम्पदाम् सूच्याम् सूचीकृतः विद्यते । अत्र भ्रमणार्थम् बहवः पर्यटकाः आगच्छन्ति । विदेशेभ्यः अपि अस्य दर्शनार्थम् जनाः आगच्छन्ति ।

(क) बौद्धनाथः काष्ठमण्डपस्य कस्याम् दिशि अस्ति ?

(अ) पूर्वस्याम् (आ) पश्चिमस्याम् (इ) दक्षिणस्याम्

(ख) बौद्धनाथः कीदृशः स्तूपः वर्तते ?

(अ) त्रिभुजाकारः (आ) चतुर्भुजाकारः (इ) अर्धगोलाकारः

(ग) अस्य भ्रमणार्थम् कति पर्यटकाः आगच्छन्ति ?

(अ) एकः (आ) बहवः (इ) शतम्

(घ) एतस्य निर्माणम् कदा अभवत् ?

(अ) चतुर्दशशताब्द्याम् (आ) दशमशताब्द्याम् (इ) प्रथमशताब्द्याम्

बौद्धनाथ काठमाडौँको पूर्वपट्टि रहेको छ । यो नेपालको ठुलो अर्ध गोलाकार स्तूप हो । यसको निर्माण चौधौँ शताब्दीमा भएको हो । यसलाई युनेस्को संस्थाले विश्वसम्पदा सूचीमा राखेको छ । यहाँ घुम्नका लागि धेरै पर्यटक आउँछन् । विदेशबाट पनि बौद्धनाथको दर्शनका लागि मानिसहरू आउँछन् ।

## ९. निर्देशानुसारेण रङ्गम भरत *(निर्देशनअनुसार रङ भर्नुहोस्)*




इदम् ---------------------------------- मन्दिरम् अस्ति ।

## १०. उदाहरणम् अनुसृत्य रिक्तस्थानम् पूरयत *(उदाहरण हेरेर खाली ठाउँ भर्नुहोस्)*

| | | |
|---|---|---|
| सः गमिष्यति । | तौ गमिष्यतः । | ते गमिष्यन्ति । |
| सा गमिष्यति । | ते गमिष्यतः । | ताः गमिष्यन्ति । |
| बालकः गमिष्यति । | बालकौ गमिष्यतः । | बालकाः गमिष्यन्ति । |
| बालिका गमिष्यति । | बालिके गमिष्यतः । | बालिकाः गमिष्यन्ति । |

सः लेखिष्यति ।    ------------------------- ।    ------------------------- ।

------------------------- ।    ------------------------- ।    ताः पठिष्यन्ति ।

------------------------- ।    तौ खादिष्यतः ।    ------------------------- ।

| | | |
|---|---|---|
| छात्रा हसिष्यति । | ------------------------- । | ------------------------- । |
| ------------------------- । | ------------------------- । | युवकाः तरिष्यन्ति । |
| ------------------------- । | वृद्धौ वत्स्यतः । | ------------------------- । |
| ------------------------- । | ते गास्यतः । | ------------------------- । |
| सा नर्तिष्यति । | ------------------------- । | ------------------------- । |
| ------------------------- । | शिक्षिके पाठयिष्यतः । | ------------------------- । |
| जनः वदिष्यति । | ------------------------- । | ------------------------- । |
| ------------------------- । | ------------------------- । | रमाः धाविष्यन्ति । |
| सा क्रीडिष्यति । | ------------------------- । | ------------------------- । |
| ------------------------- । | तौ आगमिष्यतः । | ------------------------- । |

**उद्यानम्** - बगैंचा, Garden
**रमणम्** - रमाउने काम, Pleasure
**भ्रमणम्** - घुम्ने काम, Visiting
**गमनम्** - जाने काम, Going
**मृदु** - कोमल, Soft
**हसनम्** - हाँस्ने काम, Laughing
**विहगः** - चरा, Bird
**खलु** - निश्चित रूपमा, Certainly
**वसनम्** - बस्ने काम, Siting
**पठनम्** - पढ्ने काम, Studing
**वेला** - समय, Time
**अभिरुचिः** - रुचि, Interest
**बाल्यात्** - बालककालबाट, From childhood
**निर्मांति** - बनाउँछ/बनाउँछे, Draw
**सुशीला** - स्वभाव राम्रो भएकी, Gentle
**सन्नद्धा** - तत्पर, Ready
**पितामहः** - हजुरबा, Grandfather
**दृष्ट्वा** - हेरेर, By seeing
**मतिः** - बुद्धि, Intelligence
**आकर्ण्य** - सुनेर, After listening
**खिन्ना** - खिन्न, Sad
**प्रतियोगिता** - प्रतियोगिता, Competition
**आकाशवाणी** - रेडियो, Radio
**आभूषणम्** - गहना, Ornament
**ग्लानिः** - खिन्नता, Exhaution
**वचनम्** - वाणी, कुरा, Talk
**पर्वतः** - पहाड, Hill
**मनोरमा** - सुन्दरी, सुन्दर, Beautiful
**मासानन्तरम्** - महिनापछि, After a month
**मौलिकम्** - मौलिक, Original
**स्वस्थानम्** - आफ्नो ठाउँ, Own place
**उपलब्धः** - पाइएको, Available
**सामग्री** - सामान, Material
**प्रयुञ्जन्ति** - प्रयोग गर्छन्, Use
**पूर्वः** - पूर्व, East
**पर्यटकः** - घुम्ने मानिस, Tourist
**विदेशः** - विदेश, Foreign country
**नयनम्** - आँखा, Eye

अष्टदशः पाठः

# जीवनामृतम्

१. **शिक्षकेण सह वाचयत** *(शिक्षकसँगै गाउनुहोस्)*

लोभम् त्यक्त्वा शोकम् त्यक्त्वा
दानी भूत्वा ज्ञानी भूत्वा
उचितम् कार्यम् खलु करणीयम्
क्रोधम् त्यक्त्वा खलु रमणीयम् ।



पशवः कीटाः कथम् मिलित्वा
परस्परम् ते स्नेहम् कृत्वा
वसन्ति भूमौ दृष्ट्वा सर्वम्
कुरु सहयोगम् स्मृत्वा सर्वम् ।



सत्यम् एकम् खलु वदनीयम्
सत्यम् एकम् खलु मननीयम् ।
सत्यम् एकम् खलु ग्रहणीयम् ।
सत्यम् एकम् खलु श्रवणीयम् ॥

लोभ त्यागेर, शोक त्यागेर, दानी भएर, ज्ञानी भएर, ठिक काम गर्नुपर्छ । रिसलाई त्यागेर रमाउनुपर्छ ।
पशुहरू र किराहरू परस्पर मिलेर प्रेम गरी पृथिवीमा कसरी बस्छन् ? त्यो देखेर र सम्झेर आपसमा सहयोग गर ।
हामीले सत्य मात्र बोल्नुपर्छ, सत्यको मात्र चिन्तन गर्नुपर्छ, सत्य वस्तु मात्र ग्रहण गर्नुपर्छ र सत्य वचन मात्र सुन्नुपर्छ ।

## २. कथाम् पठत *(कथा पढ्नुहोस्)*

श्वस्तनात् दिवसात् विद्यालये शीतयामस्य अवकाशः भविता । विद्यार्थिनः चत्वरे चर्चाम् कुर्वन्तः सन्ति । सुशीला परियारः अवदत्, “शीतयामस्य अवकाशः श्वस्तनात् दिवसात् भविता । तदा वयम् किमपि महत् कार्यम् करवाम ।” तत् श्रुत्वा सज्जनः घर्तीमगरः अकथयत्, “तर्हि वयम् किम् कर्तुम् शक्नुमः ? तस्मिन् विषये चर्चा भवेत् ।” रमा तामाङः किञ्चित् चिन्तयित्वा प्रस्तावम् अकरोत्, “अस्माकम् ग्रामस्य पर्यावरणम् दूषितम् वर्तते । वयम् स्वच्छतायाः अभियानम् सञ्चालयाम ।” सन्दीपः गुरुङः ताम् समर्थ्य असूचयत्, “तस्य कृते अवकराणाम् स्थापनाय भाण्डानि क्रयणीयानि । अतः रूप्यकाणाम् व्यवस्था विधेया ।” पार्वती शेर्पा उपायम् अकथयत्, “वयम् पूर्वम् ग्रामम् भ्रमाम । ग्रामीणान् पर्यावरणस्य स्वच्छतायाः विषये कथयाम । तत्पश्चात् ग्रामीणेभ्यः रूप्यकाणि सङ्कलयाम । भाण्डानि क्रीत्वा स्थाने स्थाने स्थापयाम । एवम् अस्माकम् कार्यम् सरलम् भविष्यति ।” पार्वत्या सह सर्वे सम्मताः अभवन् । ते च अवकाशस्य समये पर्यावरणस्य स्वच्छतायै कार्यम् अकुर्वन् । तेषाम् कार्यम् दृष्ट्वा ग्रामीणाः तान् पुरस्कृतवन्तः ।



भोलिबाट विद्यालयमा जाडो बिदा हुँदै छ । विद्यार्थीहरू चउरमा छलफल गरिरहेका छन् । त्यही क्रममा सुशीला परियारले भनिन्, “जाडो बिदा भोलिदेखि हुन्छ । बिदाको बेला हामीले केही महत्त्वपूर्ण काम गरौँ ।” त्यो सुनेर सज्जन घर्तीमगरले भने, “त्यसो भए हामी के गर्न सक्छौँ त ?

त्यही विषयमा छलफल गरौँ न !" रमा तामाङले केही विचार गरेर प्रस्ताव गरिन्, "हाम्रो गाउँको वातावरण प्रदूषित बनिरहेको छ । त्यसैले हामी सरसफाइको कार्यक्रम सञ्चालन गरौँ ।" सन्दीप गुरुङले तिनको समर्थन गरेर भने, "त्यसका लागि फोहोर फाल्न भाँडाहरू किन्नुपर्छ । त्यसैले रुपियाँको पनि व्यवस्था गर्नुपर्छ ।" पार्वती शेर्पाले उपाय बताइन्, "हामी पहिला गाउँ घुमौँ । गाउँलेहरूलाई वातावरणको शुद्धताका विषयमा भनौँ । त्यसपछि गाउँलेहरूबाट रुपियाँ सङ्कलन गरौँ । त्यसपछि भाँडाहरू किनेर ठाउँ ठाउँमा राखौँ । यसो गर्नाले हाम्रो काम सजिलो हुन्छ ।" पार्वतीसँग सबै सहमत भए । तिनीहरूले बिदाको समयमा वातावरणको स्वच्छताका लागि काम गरे । उनीहरूको काम देखेर गाउँलेहरूले उनीहरूलाई पुरस्कृत गरे ।

३. कोष्ठकस्य सहयोगेन रिक्तस्थानम् पूरयत *(कोठाको सहयोगले खाली ठाउँ भर्नुहोस्)*



| पिप्पलस्य, घलेग्रामः, विमर्शम्, ग्रामीणाः, सुन्दरम्, कुल्यायाः |
|---|

चित्रे -------------- अस्ति । मध्यभागे -------------- वृक्षः अस्ति । वृक्षवेद्याम् आलिन्दः निर्मितः अस्ति । तत्र -------------- एकत्रिताः सन्ति । ते परस्परम् -------------- कुर्वन्ति । -------------- निर्माणाय ते चर्चाम् कुर्वन्तः सन्ति । अत्र -------------- पर्यावरणम् दृश्यते ।

चित्रमा घलेगाउँ छ । बिच भागमा पिपलको रुख छ । रुखको फेदमा चौतारो बनाइएको छ । त्यहाँ गाउँलेहरू भेला भएका छन् । उनीहरू एकआपसमा छलफल गर्दछन् । कुलो बनाउनका लागि उनीहरू चर्चा गर्दै छन् । यहाँ सुन्दर वातावरण देखिन्छ ।

## ४. शब्दम् शुद्धम् उच्चारयत *(शब्दको शुद्धसँग उच्चारण गर्नुहोस्)*



ग्रा मः



त्रा सः



प्रा तः



भ्रा ता



घ्रा णम्



द्रा क्षा

## ५. शब्दखण्डान् संयोज्य शब्दान् निर्मात *(टुक्रा जोडी शब्द बनाउनुहोस्)*

| शब्दः | खण्डः १ | खण्डः २ |
|---|---|---|
| पर्यावरणम् | परि | आवरणम् |
| | वि | अवस्था |
| | अधि | अक्षः |
| | अभि | उदयः |
| | यदि | अपि |
| | इति | आदि |

## ६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
| व्यवस्था | पात्रम् |
| भाण्डम् | अवगुणः |
| दोषः | प्रबन्धः |
| निर्णयः | रात्रिः |
| प्रातः | निश्चयः |
| निशा | प्रभातम् |

## ७. अनुच्छेदम् पठित्वा उपयुक्तम् शीर्षकम् कथयत *(अनुच्छेद पढी उपयुक्त शीर्षक भन्नुहोस्)*



थाङ्काचित्रम् सुप्रसिद्धम् वर्तते । अस्य अपरम् नाम पौभाचित्रम् अस्ति । पौभाशब्दस्य अर्थः **पवित्रम् चित्रम्** भवति । एतत् चित्रम् कर्गजपत्रे वस्त्रखण्डे वा निर्मीयते । विशेषतः बौद्धदेवतानाम् स्वरूपम् अत्र प्रस्तूयते । अधुना थाङ्काचित्रेषु प्रकृतिः अपि चित्रिता भवति । बौद्धाः बौद्धमन्दिरेषु, गृहेषु च थाङ्काचित्रम् सज्जीकुर्वन्ति । पर्यटकेभ्यः एतादृशम् चित्रम् रोचते । ते बहुना मूल्येन थाङ्काचित्रम् क्रीणन्ति ।

थाङ्का अति प्रसिद्ध चित्र हो । यसको अर्को नाम पौभाचित्र हो । पौभा शब्दको अर्थ पवित्र चित्र भन्ने हुन्छ । यो चित्र कागज वा कपडामा बनाइन्छ । विशेष गरी बौद्ध देवी तथा देवताको स्वरूप यसमा प्रस्तुत गरिन्छ । अहिले थाङ्काचित्रमा प्रकृति पनि चित्रित हुन्छ । बौद्धहरू बौद्धगुम्बा र घरमा थाङ्काचित्रलाई सजाउँछन् । पर्यटकहरूलाई यस्तो चित्र मनपर्छ । उनीहरू धेरै मूल्यमा थाङ्काचित्र किन्छन् ।

## ८. अनुच्छेदम् पठित्वा उचितोत्तरे (√) चिह्नम् योजयत *(अनुच्छेद पढी सही उत्तरमा (√) चिह्न लगाउनुहोस्)*



गुरुङ-समुदायेषु रोदीनृत्यम् विशेषेण प्रचलितम् अस्ति । केचित् एतत् 'रोधी' इति अपि कथयन्ति । मगर-दुरासमुदायेषु अपि रोदीनृत्यम् प्रचलितम् वर्तते । ते स्वस्थाने रोदीगृहस्य निर्माणम् कुर्वन्ति । तत्र रात्रौ युवकाः युवतयश्च आगच्छन्ति । ते गायन्ति नृत्यन्ति च । समाचारस्य आदानम् प्रदानम् च ते परस्परम् कुर्वन्ति । काचिद् महिला तत्र अभिभावकत्वम् स्वीकरोति । पुरुषः अपि अभिभावकः भवितुम् शक्नोति । समुदायस्य जनाः तत्र मनोरञ्जनम् कुर्वन्ति ।

(क) रोदीनृत्यम् विशेषेण कस्मिन् समुदाये प्रचलितम् वर्तते ?

(अ) क्षत्रियसमुदाये (आ) तामाङसमुदाये (इ) गुरुङसमुदाये

(ख) रोदीगृहे जनाः कदा आगच्छन्ति ?

(अ) प्रातःकाले (आ) रात्रौ (इ) दिवसे

(ग) रोदीगृहे के गायन्ति ?

(अ) केवलम् युवकाः　　(आ) केवलम् युवतयः　　(इ) युवकाः युवतयः च

(घ) जनाः रोदीगृहे किम् कुर्वन्ति ?

(अ) मनोरञ्जनम्　　(आ) विवादम्　　(इ) शयनम्

रोदी नाच विशेष गरी गुरुङ समुदायमा प्रचलित छ । कोही यसलाई रोधी पनि भन्दछन् । मगर र दुरा समुदायमा पनि रोदी नाच प्रचलित छ । उनीहरू आफ्नो ठाउँमा रोदीघरको निर्माण गर्दछन् । त्यहाँ राति युवा र युवतीहरू आउँछन् । तिनीहरू गाउँछन् र नाच्छन् । समाचारको आदानप्रदान पनि त्यहाँ हुन्छ । कुनै महिला त्यहाँ अभिभावक बन्दछिन् । पुरुष पनि अभिभावक बन्न सक्छन् । समुदायका मानिसहरू त्यहाँ मनोरञ्जन गर्दछन् ।

## ९. निर्देशानुसारेण रङ्गम् भरत *(निर्देशनअनुसार रङ भर्नुहोस्)*




इयम् ---------------------- अस्ति ।

## १०. उदाहरणम् अनुसृत्य रिक्तस्थानम् पूरयत *(उदाहरण हेरेर खाली ठाउँ भर्नुहोस्)*

| | | |
|---|---|---|
| त्वम् गमिष्यसि । | युवाम् गमिष्यथः । | यूयम् गमिष्यथ । |
| त्वम् भविष्यसि । | युवाम् भविष्यथः । | यूयम् भविष्यथ । |
| त्वम् लेखिष्यसि । | ------------------------- । | ------------------------- । |
| ------------------------- । | ------------------------- । | यूयम् पठिष्यथ । |
| ------------------------- । | युवाम् हसिष्यथः । | ------------------------- । |
| ------------------------- । | ------------------------- । | यूयम् तरिष्यथ । |
| त्वम् वत्स्यसि । | ------------------------- । | ------------------------- । |
| ------------------------- । | युवाम् गास्यथः । | ------------------------- । |
| त्वम् नर्तिष्यसि । | ------------------------- । | ------------------------- । |
| ------------------------- । | ------------------------- । | यूयम् पाठयिष्यथ । |
| त्वम् वदिष्यसि । | ------------------------- । | ------------------------- । |
| ------------------------- । | युवाम् धाविष्यथः । | ------------------------- । |
| त्वम् क्रीडिष्यसि । | ------------------------- । | ------------------------- । |
| ------------------------- । | ------------------------- । | यूयम् आगमिष्यथ । |

लोभः - लोभ, Greed
त्यक्त्वा - त्यागेर, Having abandoned
शोकः - चिन्ता, Sorrow
भूत्वा- भएर, Have been
करणीयम् - गर्नुपर्छ, Should be done
रमणीयम् - रमाउनुपर्छ, Should be Pleased
कीटः - किरो, Insect
कथम् - कसरी, How
मिलित्वा - मिलेर, Jointly
कृत्वा - गरेर, Having done
भूमौ - भुइँमा, On the floor
दृष्ट्वा - देखेर, Having seen
स्मृत्वा - सम्झेर, Having remembered
वदनीयम् - बोल्नुपर्छ, Should Spoken
मननीयम् - मनन गर्नुपर्छ, Should be thought
ग्रहणीयम् - लिनुपर्छ, should be taken
श्रवणीयम् - सुन्नुपर्छ, should be listen
चर्चा - छलफल, Discuss
सप्ताहः - हप्ता, Week
चिन्तयित्वा - सोचेर, After thinking
प्रस्तावः - प्रस्ताव, Proposal
दूषितम् - दूषित, Polluted
स्वच्छता - सफाइ, Cleanliness
अभियानम् - अभियान, Campaign
उपायः - उपाय, Idea
ग्रामीणः - ग्राम्यः, गाउँले, Villager
त्रासः - डर, Fear
घ्राणम् - नाक, Nose
सुप्रसिद्धम् - प्रसिद्ध, Popular
अर्थः - मतलब, Meaning
स्वरूपम् - स्वरूप, Image
अधुना - अहिले, Now
समुदायः - समुदाय, Community
स्वीकरोति - स्वीकार गर्छ, Accepts
गृहम् - घर, Home
आगच्छन्ति - आउँछन्, Come
विवादः - विवाद, Disputation

## एकोनविंशः पाठः

# सुसङ्गतिः

### १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



दुष्टम् त्यज त्यज दुर्जनसङ्गम्
चिन्ताम् त्यज त्यज पीडकसङ्गम् ।
पितरौ भज भज सज्जनवृन्दम्
मान्यान् भज भज त्वम् गुरुवृन्दम् ॥

भीतिम् त्यज त्यज त्वम् अभिमानम्
ईर्ष्याम् त्यज त्यज निन्दाकरणम् ।
कीर्तिम् भज भज त्वम् सच्चरितम्
धैर्यम् भज भज नित्यम् अमृतम् ॥

कलहम् त्यज त्यज द्वेषम् रागम्
हरणम् त्यज त्यज अधिकम् भागम् ।
सत्यम् भज भज मधुरम् वचनम्
प्रीतिम् भज भज भगवच्चरणम् ॥

दुष्ट र दुष्टहरूको सङ्गत त्याग, चिन्ता र पीडा दिनेहरूको सङ्गत त्याग, आमाबुबा, सज्जनहरू, मान्यजन र गुरुहरूको सेवा गर ।
डर, घमन्ड, डाह र अरूको निन्दा गर्ने काम त्याग । असल चरित्र, कीर्ति राख्ने काम, धैर्यको पछि लाग । यसो गर्नाले तिमी अमर बन्दछौ ।
झगडा त्याग, अरूको आरिस गर्ने काम छोड । कुनै पनि व्यक्ति वा वस्तुप्रति धेरै आसक्त नहोऊ । चोरी गर्ने काम र ठुलो भाग खोज्ने काम पनि छोडिदेऊ । सत्य र मिठो वचनको प्रयोग गर । सबैमा प्रेमपूर्ण व्यवहार गर र भगवान्को भजन गर ।

### २. कथाम् पठत *(कथा पढ्नुहोस्)*

सञ्जयः यादवः बाराजनपदे वसति स्म । सः केवलम् क्रीडनेन कलहेन च समयम् यापयति स्म । सः मूर्खाणाम् एव सङ्गीतिम् करोति स्म । सीता पासवानः तस्य प्रतिवेशिनी आसीत् । सा सुशीला आसीत् । ग्रामे सर्वे ताम् प्रशंसन्ति स्म । एकदा सीता गृहम् गच्छन्ती आसीत् । मार्गे सा सञ्जयम्



अपश्यत् । सञ्जयः अन्यैः सह विवादम् कुर्वन् आसीत् । सा सञ्जयम् अकथयत्, "त्वम् किमर्थम् कलहम् कुर्वन् असि ? अधुना सायङ्कालः समागतः अस्ति । आगच्छ, आवाम् सहैव गृहम् गच्छाव ।" सा अन्यान् बालान् पश्यन्ती अकथयत्, "यूयम् च गृहम् गच्छत ।"

मार्गे सीता अवदत्, "सञ्जय ! कलहेन सर्वेषाम् हानिः भवति । शरीरे क्षतिः भवितुम् शक्नोति ।" सञ्जयः अकथयत्, "ह्यः ते माम् अताडऽयन् । तेन अहम् अद्य अपि हस्ते पीडाम् अनुभवन् अस्मि ।" सीता अवदत् "अद्यप्रभृति त्वम् कलहम् मा कुरु, तस्मिन् समये पठ लिख च, गृहस्य कार्यम् कुरु, यत् शक्नोषि तत् कुरु, मातुः पितुः च कार्ये सहयोगम् कुरु ।" तत् श्रुत्वा सञ्जयः पश्चात्तापम् अकरोत् । तत्पश्चात् सः दुर्व्यवहारम् अत्यजत् । सः सदा सीतया सह मिलति स्म । सीता च तम् सदाचारान् शिक्षयति स्म ।

मासः व्यतीतः । एकदा सञ्जयस्य माता सीतायाः गृहम् आगच्छत् । सा सीताम् आहूय प्राशंसत्, "तव कथनेन सञ्जयः सुशीलः अभवत् । सः नित्यम् विद्यालयम् गच्छति । स गृहकार्यम् च नित्यम् करोति । मम, पितुः च कार्येषु सहयोगम् करोति । तव सङ्गेन मम पुत्रः शोभनः जातः । पुत्रि ! त्वम् धन्या असि ।"

सञ्जय यादव बारा जिल्लामा बस्दथ्यो । ऊ खेलेर र झगडा गरेर मात्र समय बिताउँथ्यो । ऊ मूर्खहरूको मात्र सङ्गत गर्दथ्यो । सीता पासवान उसकी छिमेकी थिइन् । उनी असल स्वभाव भएकी बालिका थिइन् । गाउँमा सबै उनको प्रशंसा गर्दथे । एक दिन सीता घर जाँदै थिइन् । बाटामा उनले सञ्जयलाई भेटिन् । सञ्जय गाउँका अरू केटाहरूसँग झगडा गर्दै थियो । उनले

सञ्जयलाई भनिन्, “तिमी किन झगडा गर्दै छौ ? अहिले साँझ परेको छ । आऊ हामी दुई सँगै घर जाऔँ ।” उनले फेरि अरु केटालाई हेर्दै भनिन्, “तिमीहरू पनि घर जाओ ।”

बाटामा सीताले भनिन्, “सञ्जय ! झगडाले सबैको हानि हुन्छ, शरीरमा क्षति हुन्छ ।” सञ्जयले भन्यो, “हिजो झगडा भयो । त्यसकारण आज पनि हात दुखिरहेको छ ।” सीताले उपाय बताइन्, “आजदेखि तिमी झगडा नगर । त्यो समयमा पढ र लेख । घरको काम गर । जे सक्छौ, त्यही गर । आमा र बुबाको काममा सहयोग गर ।” त्यो सुनेर सञ्जयले पश्चात्ताप गर्‍यो । त्यसपछि उसले खराब व्यवहार छोड्यो । ऊ सधैँ सीतालाई भेट्थ्यो । सीता पनि सधैँ उसलाई राम्रो व्यवहार सिकाउँथिन् ।

एक महिना बित्यो । एक दिन सञ्जयकी आमा सीताको घरमा आउनुभयो । उहाँले सीतालाई बोलाएर उनको प्रशंसा गर्नुभयो, “तिम्रो भनाइले सञ्जय असल स्वभावको भयो । ऊ सधैँ विद्यालय जान्छ, गृहकार्य पनि गर्छ, मेरो र बुबाको काममा सहयोग गर्दछ । तिम्रो सङ्गतले मेरो छोरो असल भयो । हे छोरी ! तिमी धन्य छौ ।”

## ३. कोष्ठकस्य साहाय्येन रिक्तस्थानम् पूरयत *(कोठाको सहायताले खाली ठाउँ भर्नुहोस्)*




| वाद्यानि, नृत्यन्तः, उच्चारणम्, महिलाः, सन्ति, कीर्तनम्, शान्तम् |
|---|

प्राङ्गणे ----------- पुरुषाः च सन्ति । तत्र केचन ----------- वादयन्तः सन्ति । प्रायशः सर्वे श्रद्धालवः गायन्तः ----------- । केचन ----------- सन्ति । एतत् कार्यम् ----------- कथ्यते । कीर्तनम् भगवतः नाम्नः --------- अस्ति । एतेन मनः ----------- भवति ।

आँगनमा महिला र पुरुषहरू छन् । त्यहाँ केही बाजा बजाउँदै छन् । प्रायः सबै श्रद्धालु गाउँदै छन् । केही नाच्दै छन् । यस कार्यलाई कीर्तन भनिन्छ । कीर्तन भनेको भगवान्को नामको उच्चारण हो । यसबाट मन शान्त हुन्छ ।

४. परिवेष्टितम् अक्षरम् ध्यात्वा शब्दम् शुद्धम् उच्चारयत *(गोलो लगाइएका अक्षरमा ध्यान दिँदै शुद्धसँग शब्दको उच्चारण गर्नुहोस्)*



(क्री)डा



(प्री)तिः



(ग्री)वा



(व्री)हिः



(श्रीः)



(क्री)डनकम्

५. शब्दखण्डान् संयोज्य समस्तशब्दान् निर्मात *(शब्दको अंश जोडी सिङ्गो शब्द बनाउनुहोस्)*

- तत्पश्चात् = तत् + पश्चात्
- ______ = वाद् + यम्
- ______ = सायङ् + कालः
- ______ = विद् + वान्
- ______ = उच् + चारणम्
- ______ = निर् + माणम्

## ६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
| मूर्खः | कदाचित् |
| शान्तः | विद्वान् |
| नित्यम् | अशान्तः |
| सत्यम् | दोषः |
| गुणः | मलिनः |
| प्रसन्नः | असत्यम् |
| शीघ्रम् | घृणा |
| प्रेम | विलम्बः |
| विकासः | अस्वस्थः |
| स्वस्थः | विनाशः |

## ७. लयम् अनुसृत्य गायत *(लयपूर्वक गाउनुहोस्)*

अच्युतम् केशवम् रामनारायणम्
कृष्णादामोदरम् वासुदेवम् हरिम् ।
श्रीधरम् माधवम् गोपिकावल्लभम्
जानकीनायकम् रामचन्द्रम् भजे ॥

## ८. उपरितने कीर्तने प्रयुक्तम् क्रियापदम् कथयत *(माथिको कीर्तन प्रयोग भएको क्रियापद भन्नुहोस्)* ।

## ९. संवादम् पठित्वा पृष्टानाम् प्रश्नानाम् उचितोत्तरे (√) चिह्नम् योजयत *(संवाद पढेर दिइएका प्रश्नको सही उत्तरमा (√) चिह्न लगाउनुहोस्)*

(रमेशः चित्रकारः आपणम् गच्छन् आसीत् । मार्गे निष्ठया सह तस्य मेलनम् अभवत् ।)

रमेशः = भो सखि ! कुतः आगच्छन्ती असि ?

निष्ठा = अद्य उद्यान-निर्माणस्य कार्यक्रमः अभूत् । तस्मिन् कार्यक्रमे सहभागिनी भूत्वा आगच्छन्ती अस्मि ।



रमेशः = अहो ! सुन्दरः कार्यक्रमः । तत्र किम् अभूत् ?

निष्ठा = तत्र जनाः भूमेः खननम् कृतवन्तः । ततः विटपानाम् रोपणम् कृतवन्तः ।

रमेशः = त्वम् किम् कृतवती ?

निष्ठा = अहम् पञ्चानाम् विटपानाम् रोपणम् कृतवती । मम कार्यम् दृष्ट्वा सर्वे प्रसन्नाः अभूवन् । अतः अहम् अतीव प्रसन्ना अस्मि ।

रमेशः = शोभनम् कार्यम् । आगामिदिनेषु अहम् अपि एतादृशेषु कार्यक्रमेषु सहभागी भविष्यामि ।

निष्ठा = शोभनम् । उत्तमः ते विचारः ।

(निष्ठा गृहम् प्रत्यागच्छति चेत् रमेशः विटपानाम् रोपणार्थम् गच्छति ।)

(क) रमेशः कुत्र गच्छन् आसीत् ?

(अ) गृहम् (आ) आपणम् (इ) नगरम्

(ख) कदा उद्यान-निर्माणस्य कार्यक्रमः अभूत् ?

(अ) अद्य (आ) ह्यः (इ) परह्यः

(ग) जनाः किम् कृतवन्तः ?

(अ) लेखनम् (आ) चिन्तनम् (इ) रोपणम्

(घ) निष्ठा कतीनाम् किटपानाम् रोपणम् कृतवती ?

(अ) पञ्चानाम् (आ) सप्तानाम् (इ) नवानाम्

(रमेश चित्रकार बजार जाँदै थियो । बाटामा निष्ठासँग उसको भेट भयो ।)

रमेशः = ए साथी ! कहाँबाट आउँदै छौ ?

निष्ठा = आज बगैंचा बनाउने कार्यक्रम थियो । त्यहाँ गएर आउँदै छु ।

रमेशः = अहा ! राम्रो कार्यक्रम रहेछ । त्यहाँ के भयो ?

निष्ठा = त्यहाँ मानिसहरूले भुइँ खने र बिरुवाहरू रोप्ने काम गरे ।

रमेशः = तिमीले त्यहाँ के गऱ्यौ ?

निष्ठा = मैले पाँचओटा बिरुवा रोपेँ । मेरो काम देखेर सबै खुसी भए । त्यसैले म पनि खुसी छु ।

रमेशः = राम्रो काम । म पनि आगामी दिनमा हुने यस्ता कार्यक्रमहरूमा सहभागी हुने छु ।

निष्ठा = राम्रो । तिम्रो विचार उत्तम छ ।

(निष्ठा घरतिर फर्किन्छे भने रमेश बिरुवा रोप्न जान्छ ।)

## १०. रङ्गम् भरित्वा नाम लिखत *(रङ भरेर नाम लेख्नुहोस्)*



इदम् ------------------------------- अस्ति ।

## ११. उदाहरणम् अनुसृत्य रिक्तस्थानम् पूरयत *(उदाहरण हेरेर खाली ठाउँ भर्नुहोस्)*

| | | |
|---|---|---|
| अहम् भविष्यामि । | आवाम् भविष्यावः । | वयम् भविष्यामः । |
| अहम् -------------- । | -------------- लेखिष्यावः । | वयम् -------------- । |

| | | |
|---|---|---|
| --------------- करिष्यामि । | आवाम् --------------- । | --------------- करिष्यामः । |
| -------------------------- । | -------------------------- । | वयम् पठिष्यामः । |
| -------------------------- । | आवाम् --------------- । | -------------------------- । |
| -------------------------- । | -------------------------- । | वयम् --------------- । |
| अहम् --------------- । | -------------------------- । | -------------------------- । |
| -------------------------- । | आवाम् गास्यावः । | -------------------------- । |
| अहम् नर्तिष्यामि । | -------------------------- । | -------------------------- । |
| -------------------------- । | -------------------------- । | वयम् पाठयिष्यामः। |
| अहम् वदिष्यामि । | -------------------------- । | -------------------------- । |
| -------------------------- । | आवाम् धाविष्यामः । | -------------------------- । |
| अहम् क्रीडिष्यामि । | -------------------------- । | -------------------------- । |
| -------------------------- । | -------------------------- । | वयम् आगमिष्यामः । |

**पीडकः** - दुःख दिने, Who gives torcher
**पितरौ** - आमाबुबा, Parents
**वृन्दम्** - समूह, Group
**भीतिः** - डर, Fear
**अभिमानम्** - घमन्ड, Proudness
**ईर्ष्या** - डाह, jelousy
**कलहः** - झगडा, Quarrel
**द्वेषः** - आरिस, jelousy
**रागः** - आसक्ति, Attachment
**हरणम्** - चोरी, Theft
**सखा/सखी** - साथी, Friend
**मूर्खः** - मूर्ख, Foolish
**शीलयुक्ता** - सुशीला, Gentle
**सायङ्कालः** - साँझ, Evening
**हानिः** - घाटा, Loss
**पीडा** - पीडा, Pain
**शिक्षयति** - सिकाउँछ, Teach
**व्यतीतः** - बितेको, Passed
**सङ्गः** - सङ्गत, Accompany
**पुत्रः** - छोरो, Son
**पुत्री** - छोरी, Daughter
**धन्यः** - प्रशंसा गर्न योग्य, Praiseworthy
**मनः** - मन, Heart
**ग्रीवा** - घाँटी, Neck
**व्रीहिः** - धान, Paddy
**सत्यम्** - साँचो, Truth
**प्रेम** - प्रेम, Love
**स्वस्थः** - सत्य, Healthy
**अतीव** - अत्यन्त, Extremely
**शोभनम्** - राम्रो, Nice

विंशः पाठः

# शिष्टाचारः

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

प्रातःकाले जननी दृष्टा
'शुभप्रभातम्' कथयामि ।
प्रातः प्राप्तः गृहे मातुलः
'शुभप्रभातम्' कथयामि ॥





मार्गे मिलिता दिवा पितृव्या
अहम् 'शुभदिनम्' कथयामि ।
दिवा गुरुः मे कक्षाम् प्राप्तः
तम् च 'शुभदिनम्' कथयामि ॥

क्षेत्रे भ्राता मिलितः सायम्
'शुभसन्ध्या भो' कथयामि ।
पितामहाग्रे सायम् प्राप्य
तम् 'शुभसन्ध्या' कथयामि ॥





शयितुम् गच्छति रात्रौ माता
ताम् 'शुभरात्रिः' कथयामि ।
'गच्छ स्वपितुम्' कथयति जनकः
तम् 'शुभरात्रिः' कथयामि ॥

बिहान आमालाई देख्दा शुभ बिहानी (शुभ प्रभात) भन्दछु । बिहान मामा घर आउनुहुँदा शुभ प्रभात भन्दछु । दिउँसो बाटामा काकीसँग भेट हुँदा शुभदिन भन्दछु । दिउँसो मेरा गुरु कक्षामा आउनुहुँदा उहाँलाई पनि शुभदिन भन्दछु । आमा राती सुत्न जानुहुन्छ । उहाँलाई शुभरात्रि भन्दछु । बुबा 'सुत्न जाऊ' भन्नुहुन्छ । (म) उहाँलाई शुभरात्रि भन्दछु ।

२. अभिवादनबोधकान् चतुरः शब्दान् निर्मात *(अभिवादन बुझाउने चार शब्द निर्माण गर्नुहोस्)*

प्रभातम्      दिनम्

\+ शुभ +

\+    +

सन्ध्या      रात्रिः

(क) --------------------------------    (ख) --------------------------------

(ग) --------------------------------    (घ) --------------------------------

३. चित्राणि विलोक्य रिक्तस्थानेषु 'शुभप्रभातम्' 'शुभदिनम्' 'शुभसन्ध्या' 'शुभरात्रिः' वा इति लिखत *(चित्रहरू हेरी खाली ठाउँमा 'शुभप्रभातम्' 'शुभदिनम्' 'शुभसन्ध्या' अथवा 'शुभरात्रिः' लेख्नुहोस्)*

**(क) प्रातःकाले**







------------ पुत्र !      ------------ पितः !

**(ख) दिने**







------------ पितृव्ये !      ------------ गुरो !

(ग) सायङ्काले







------------ मातः !

------------ पितामह !

(घ) रात्रौ







------------ पुत्र !

------------ पुत्रि !

४. शब्दान् शुद्धम् उच्चारयत *(शुद्धसँग उच्चारण गर्नुहोस्)*



## ५. कथाम् पठित्वा सन्देशम् कथयत *(कथा पढी सन्देश बताउनुहोस्)*



अमेरिकादेशे पाउलनामकः मेधावी किशोरः आसीत् । तस्य परिवारः निर्धनः आसीत् । सः अधिकम् पठितुम् इच्छति स्म । सः गृहेषु समाचारपत्रम् प्रापयति स्म । तेन धनम् अर्जयित्वा सः अध्ययनशुल्कम् सञ्चिनोति स्म । अध्ययनार्थम् धनसञ्चयाय सः कदाचित् बुभुक्षितः एव कार्यम् करोति स्म । एकदा सः समाचारपत्रम् प्रापयन् एकस्मिन् गृहे प्रापत् । सः अत्यन्तम् बुभुक्षितः पिपासितः च आसीत् । सः पीडया चलितुम् अपि असमर्थः अभवत् । तस्मिन् गृहे एका महिला आसीत् । सः स्वपीडाम् श्रावयित्वा तया सह जलम् अयाचत । महिला अन्तः अगच्छत् । सा पानपात्रे दुग्धम् आनयत् । स्मितवदना सा किशोराय दुग्धम् अददात् । किशोरः अपि सम्पूर्णम् दुग्धम् एकस्मिन् एव श्वासे अपिबत् । अनन्तरम् तस्य शरीरे काचित् स्फूर्तिः आगता । सः दुग्धस्य मूल्यम् दातुम् ऐच्छत् । महिला अकथयत्, "मम माता सहयोगस्य मूल्यम् न गृह्णाति स्म ।" किशोरः तस्याः भावम् अबुध्यत । सः 'धन्यवादः' इति उक्त्वा बहिः निरगच्छत् ।

कालान्तरे सा महिला वृद्धा अभवत् । एकदा सा अस्वस्था अभवत् । सा चिकित्सायै स्थानीयम् चिकित्सालयम् अगच्छत् । तस्याः रोगस्य उपचारः दुःसाध्यः आसीत् । अतः तत्रत्याः चिकित्सकाः ताम् नगरे प्रैषयन् । एकः वरिष्ठः चिकित्सकः तस्याः उपचाराय आगच्छत् । सः तस्याः रोगम् अजानात् । सः अन्यैः सह विमृश्य शीघ्रम् तस्याः शल्यक्रियाम् अकरोत् । कतिपयैः दिनैः सा स्वस्था अभवत् । चिकित्सालयस्य शुल्कविवरणम् आगच्छत् । तद् दृष्ट्वा सा पुनः चिन्तिता अभवत् । सम्पूर्णम् शुल्कम् दातुम् सा आजीवनम् असमर्था आसीत् । कश्चिद् आगत्य तस्याः हस्ते अपरम्

एकम् कर्गजम् अददात् । तत्र लिखितम् आसीत्, "पञ्चविंशतिवर्षपूर्वम् प्रदत्तस्य दुग्धस्य कृते पुनः धन्यवादाः" इति । सा उपरि अपश्यत् । सा तत्र स्वस्याः उपचारकम् चिकित्सकम् अपश्यत् । सः नमस्कारम् कुर्वन् उपस्थितः आसीत् । चिकित्सकः सः एव किशोरः आसीत्, यः गृहेषु समाचारपत्रम् प्रापयति स्म । वृद्धा तम् परिचित्य स्मितम् अहसत् । सः अकथयत्, "भवत्याः सम्पूर्णम् उपचार-शुल्कम् अहम् अददाम्, परम् अहम् कदाचिद् अपि तस्य दुग्धस्य मूल्यम् दातुम् न शक्नोमि ।"

अमेरिका देशमा पाउल नाम गरेको एउटा बुद्धिमान् किशोर थियो । उसको परिवार गरिब थियो । ऊ धेरै पढ्न चाहन्थ्यो । ऊ घरघरमा पत्रिका पुऱ्याउँथ्यो । त्यसबाट धन कमाएर ऊ पढाइ खर्च जुटाउँथ्यो । पढ्नका लागि धन जोगाउँदा ऊ कहिलेकाहीँ भोकभोकै काम गर्दथ्यो । एक दिन पत्रिका पुऱ्याउँदै जाँदा ऊ एउटा घरमा पुग्यो । ऊ एकदम भोकाएको र तिर्खाएको थियो । ऊ पीडाले हिँड्न नसक्ने भयो । त्यस घरमा एक महिला थिइन् । उसले आफ्नो पीडा सुनाएर उनीसँग पानी माग्यो । महिला भित्र गइन् । उनले गिलासमा दुध ल्याइन् । हँसिलो मुख गरेर तिनले किशोरलाई दुध दिइन् । किशोरले पनि एक सासमा सबै दुध पियो । त्यसपछि उसको शरीरमा अलिकति फुर्ती आयो । उसले दुधको मूल्य दिन चाहयो । महिलाले भनिन्, "मेरी आमा सहयोगको मूल्य लिनुहुन्नथ्यो ।" किशोरले उनको भाव बुझ्यो । ऊ 'धन्यवाद' भन्दै त्यहाँबाट निस्कियो ।

कालान्तरमा ती महिला वृद्ध भइन् । एक दिन उनी बिरामी परिन् । उनी स्थानीय अस्पतालमा गइन् । उनको रोगको उपचार कठिन थियो । त्यसकारण त्यहाँका डाक्टरहरूले उनलाई सहर पठाए । एक वरिष्ठ डाक्टर उनको उपचारका लागि आए । उनले तिनको रोग चिने । उनले अरूसँग सल्लाह गरी तिनको शल्यक्रिया गरे । केही दिनमा उनी स्वस्थ भइन् । अस्पतालको बिल आयो । त्यो देखेर तिनी फेरि चिन्तित भइन् । पूरा बिल तिर्न उनी जीवनभर नसक्ने थिइन् । कोही आएर तिनको हातमा अर्को कागज दियो । त्यहाँ लेखिएको थियो, "पच्चिस वर्षअघि दिइएको दुधका लागि धन्यवाद ।" उनले माथि हेरिन् । उनले त्यहाँ आफ्नो उपचार गर्ने तिनै डाक्टरलाई देखिन् । उनी नमस्कार गर्दै उभिएका थिए । ती डाक्टर तिनै किशोर थिए । वृद्धाले उनलाई चिनेर मुसुक्क हाँसिन् । उनले भने, "तपाईंको सम्पूर्ण बिल मैले तिरेँ तर म कहिल्यै पनि त्यो दुधको मूल्य तिर्न सक्दिनँ ।"

## ६. संवादम् पठित्वा क्रियाकलापान् कुरुत *(संवाद पढ्नुहोस् र क्रियाकलाप गर्नुहोस्)*



(जानकी गर्जा शिक्षिका अस्ति । सा कक्षायाम् प्रविशति ।)

विद्यार्थिनः - शुभप्रभातम् गुरुमातः !

जानकी - शुभप्रभातम् ।

विद्यार्थिनः - गुरुमातः ! अस्माकम् कक्षायाम् स्वागतम् ।

जानकी - धन्यवादः । उपविशत ।

पार्वती पाख्रिनः - गुरुमातः ! कृपया भवती अद्य शिष्टाचारस्य विषये किमपि कथयतु । अहम् शिष्टाचारस्य विषये ज्ञातुम् इच्छामि ।

जानकी - चिन्ता मास्तु । अद्य वयम् शिष्टाचारस्य विषये एव विमर्शम् कुर्मः । मुकुन्द ! कः शिष्टाचारः ?

मुकुन्दः गुरुङः - गुरुमातः ! मान्यानाम् सम्मानम् शिष्टाचारः अस्ति ।

जानकी - शोभनम् । महालक्ष्मि ! एतस्मिन् विषये त्वम् किमपि कथयसि वा ?

महालक्ष्मीः चौधरी - सर्वेषाम् यथोचितम् अभिवादनम् शिष्टाचारः अस्ति ।

जानकी - शोभनम् । नवराज ! त्वम् अन्यत् किमपि कथयितुम् शक्नोषि ?

नवराजः परियारः - अतिथीनाम् सत्कारः अपि शिष्टाचारः अस्ति ।

जानकी - शोभनम् । सर्वैः सह शिष्टतया व्यवहरणम् शिष्टाचारः अस्ति ।

विष्णुः तामाङः - क्षम्यताम् गुरुमातः ! सर्वैः सह शिष्टतया व्यवहारः कथम् सम्भवति ? कनिष्ठैः सह तु शिष्टतया व्यवहारः न क्रियते ।

जानकी - तथा न भवति विष्णो ! ज्येष्ठानाम् व्यवहारेण कनिष्ठाः जानन्ति । तेषाम् पुरः शिष्टतया व्यवहारः न क्रियते चेत् ते अपि ज्येष्ठैः सह शिष्टतया न व्यवहरन्ति । अतः कनिष्ठैः सह अपि स्नेहेन शिष्टतया च व्यवहारः कर्तव्यः । बुद्धम् ?

विष्णुः - आम् ।

जानकी - मातापित्रोः गुरूणाम् च आज्ञापालनम् अपि शिष्टाचारः अस्ति । गृहे मातापित्रोः कार्येषु सहयोगः अपि शिष्टाचारः अस्ति । अशक्तानाम् सहयोगः अपि शिष्टाचारः अस्ति । सखिभिः सह मेलनम् अपि शिष्टाचारः एव । युष्माभिः बुद्धम् किल ?

विद्यार्थिनः - सम्यक् बुद्धम् गुरुमातः !

जानकी - अस्तु । युष्माकम् जीवनम् सफलम् स्यात् । मम शुभाशयाः ।

(जानकी गर्जा शिक्षिका हुनुहुन्छ । उहाँ कक्षामा प्रवेश गर्नुहुन्छ ।)

विद्यार्थी - शुभप्रभात गुरुआमा !

जानकी - शुभप्रभात ।

विद्यार्थी - गुरुआमा ! हाम्रो कक्षामा स्वागत छ ।

जानकी - धन्यवाद । बस ।

पार्वती पाख्रिन - गुरुआमा ! कृपया आज शिष्टाचारका विषयमा केही भन्नुहोस् । म शिष्टाचारका विषयमा जान्न चाहन्छु ।

जानकी - चिन्ता नगर । आज हामी शिष्टाचारका विषयमा नै छलफल गर्छौं । मुकुन्द ! शिष्टाचार भनेको के हो ?

मुकुन्द गुरुङ - गुरुआमा ! मान्यजनको सम्मान शिष्टाचार हो ।

जानकी - ठिक । महालक्ष्मी ! यस विषयमा तिमी केही भन्छौ ?

महालक्ष्मी चौधरी - आवश्यकताअनुसार सबैलाई अभिवादन गर्नु शिष्टाचार हो ।

| | | |
|---|---|---|
| जानकी | - | ठिक । नवराज ! तिमी अरू केही भन्छौ ? |
| नवराज परियार | - | अतिथिहरूको सत्कार गर्नु पनि शिष्टाचार हो । |
| जानकी | - | ठिक । सबैसँग शिष्टताले व्यवहार गर्नु शिष्टाचार हो । |
| विष्णु तामाङ | - | माफ गर्नुहोला गुरुआमा ! सबैसँग शिष्टताले व्यवहार गर्न कसरी सकिन्छ ? आफूभन्दा सानासँग त शिष्टताले व्यवहार गरिन्न । |
| जानकी | - | त्यस्तो हुँदैन विष्णु ! ठुलाको व्यवहारबाट सानाले सिक्छन् । तिनीहरूका अगाडि शिष्टताले व्यवहार गरिएन भने उनीहरूले पनि ठुलासँग शिष्ट व्यवहार गर्दैनन् । त्यसैले सानाहरूसँग पनि माया र शिष्टताले व्यवहार गर्नुपर्छ । बुझ्यौ ? |
| विष्णु | - | हजुर बुझेँ । |
| जानकी | - | आमाबुबाले भनेको मान्नु पनि शिष्टाचार हो । घरमा आमाबुबाको काममा सहयोग गर्नु पनि शिष्टाचार हो । अशक्तहरूलाई सहयोग गर्नु पनि शिष्टाचार हो । साथीहरूसँग मिल्नु पनि शिष्टाचार नै हो । बुझ्यौ तिमीहरूले ? |
| विद्यार्थीहरू | - | राम्ररी बुझ्यौँ गुरुमाता ! |
| जानकी | - | ल ल । तिमीहरूको जीवन सफल होस् । मेरो शुभकामना । |

## (क) उचितपदम् भरित्वा रिक्तस्थानम् पूरयत *(उपयुक्त पद राखी खाली ठाउँ भर्नुहोस्)*

(अ) गुरुमातः ! अस्माकम् कक्षायाम् --------- ।

(आ) --------- । उपविशत ।

(इ) --------- । अद्य वयम् शिष्टाचारस्य विषये विमर्शम् कुर्मः ।

(ई) --------- । महालक्ष्मि ! एतस्मिन् विषये एव त्वम् किमपि कथयसि ?

(उ) --------- गुरुमातः ! सर्वैः सह शिष्टतया व्यवहारः कथम् सम्भवति ?

(ऊ) --------- । युष्माकम् जीवनम् सफलम् स्यात् । मम --------- ।

(ख) समुचितोत्तरम् रेखया परिवेष्टयत *(उपयुक्त उत्तरमा गोलो घेरा लगाउनुहोस्)*

(अ) केषाम् सम्मानम् शिष्टाचारः अस्ति ?

| | | |
|---|---|---|
| मान्यानाम् | मूर्खाणाम् | दृष्कृताम् |

(आ) केषाम् सत्कारः शिष्टाचारः अस्ति ?

| | | |
|---|---|---|
| वृक्षाणाम् | जन्तूनाम् | अतिथीनाम् |

(इ) केषाम् व्यवहारेण कनिष्ठाः जानन्ति ?

| | | |
|---|---|---|
| कनिष्ठानाम् | ज्येष्ठानाम् | बलिष्ठानाम् |

(ई) कनिष्ठैः सह कथम् व्यवहारः करणीयः ?

| | | |
|---|---|---|
| दुष्टतया | रुष्टतया | शिष्टतया |

(उ) केषाम् सहयोगः शिष्टाचारः अस्ति ?

| | | |
|---|---|---|
| स्वस्य | अशक्तानाम् | शक्तानाम् |

(ऊ) कैः सह मेलनम् शिष्टाचारः अस्ति ?

| | | |
|---|---|---|
| मित्रैः | शत्रुभिः | पुत्रैः |

७. समानार्थ वोधकान् संस्कृताङ्लशब्दान् परस्परम् मेलयत *(उही अर्थ दिने संस्कृत र अङ्ग्रेजी शब्दको जोडा मिलाउनुहोस्)*

| | |
|---|---|
| क्षम्यताम् | Don't worry |
| चिन्ता मास्तु | Please |
| स्वागतम् | Thank you |
| शुभरात्रिः | Excuse me |
| धन्यवादः | Welcome |
| कृपया | Good night |

## ८. रिक्तस्थाने कोष्टकात् उचितशब्दम् लिखत *(उपयुक्त शब्द छानेर लेख्नुहोस्)*



| सः | पारम् | जनः | पश्यति | धन्यवादम् | गन्तुम् |
| --- | --- | --- | --- | --- | --- |

एकः --------- अस्ति । --------- द्रष्टुम् न शक्नोति । सः मार्गस्य पारम् --------- इच्छति । जिज्ञासा तम् --------- । सा तम् मार्गस्य --------- नयति । सः जिज्ञासायै --------- ददाति ।

एक जना मानिस छन् । उनी देख्न सक्दैनन् । उनी सडकपारि जान चाहन्छन् । जिज्ञासा तिनलाई देख्छिन् । उनी तिनलाई सडकपारि लैजान्छिन् । तिनी जिज्ञासालाई धन्यवाद दिन्छन् ।

## ९. उदाहरणम् विलोक्य कोष्ठके 'सः', 'सा' 'तद्' वा इति लिखत *(उदाहरण हेरी कोठाभित्र 'सः', ' सा' वा 'तद्' लेख्नुहोस्)*



सा नारी



सः नरः



तद् गृहम्

(क)



------- शिक्षकः



------- शिक्षिका



------- पट्टम्

(ख)



------- छात्रः



------- छात्रा



------- पुस्तकम्

(ग)



------- मार्गः



------- द्विचक्रिका



------- यानम्

(घ)



------- तडागः



------- नदी



------- वनम्

१०. रिक्तस्थाने 'सः', 'सा' 'तद्' वा इति लिखत *(खाली ठाउँमा 'सः', 'सा' वा 'तद्' लेख्नुहोस्)*

(क) मुकुन्दः विद्यालयम् गच्छति । ------------ पठति ।

(ख) इन्दिरा नर्तकी अस्ति । ------------ नृत्यति ।

(ग) पत्रम् शुष्कम् अस्ति । ------------ पतति ।

(घ) जलम् वहति । ------------ शीतम् अस्ति ।

(ङ) पितृव्या शिक्षिका अस्ति । ------------ पाठयति ।

(च) मातुलः आगच्छति । ------------ माम् स्वगृहम् नयति ।

एकविंशः पाठः

# प्रकृतिपूजनम्

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*



हे धरे अन्नदे ! अस्तु तुभ्यम् नमः ।
हे सरित् तोयदे ! अस्तु तुभ्यम् नमः ॥

वर्तसे प्राणदः हे मरुत् ! ते नमः ।
त्वम् जगद्दीपकः सूर्य हे ते नमः ॥



हे शिरोधारक व्योम ! तुभ्यम् नमः ।
त्वम् फलानाम् प्रदः वृक्ष ! तुभ्यम् नमः ॥

वृष्टिदः त्वम् सदा मेघ हे ! ते नमः ।
सर्वकल्याणदायै प्रकृत्यै नमः ॥

हे अन्नदायिनी धर्ती ! तिमीलाई नमस्कार छ ।
हे जलदायिनी नदी ! तिमीलाई नमस्कार छ ।
हे प्राणका दाता वायु ! तिमीलाई नमस्कार छ ।
हे जगतलाई प्रकाशित गर्ने सूर्य ! तिमीलाई नमस्कार छ ।
हे शिरमाथि रहने आकाश ! तिमीलाई नमस्कार छ ।
हे फलका दाता वृक्ष ! तिमीलाई नमस्कार छ ।
वर्षा गराउने हे मेघ ! तिमीलाई नमस्कार छ ।
सबैको कल्याण गर्ने प्रकृतिलाई नमस्कार छ ।

## २. रिक्तस्थाने उचितशब्दम् लिखत *(खाली ठाउँमा उपयुक्त शब्द लेख्नुहोस्)*

| | | | | | |
|---|---|---|---|---|---|
| कदलः | शमी | दूर्वा | दाडिमः | बिल्वः | आम्रः |

(क)



इयम् ------------ अस्ति ।

(ख)



अयम् ------------ अस्ति ।

(ग)



अयम् ------------ अस्ति ।

(घ)



अयम् ------------ अस्ति ।

(ङ)



इयम् ------------ अस्ति ।

(च)



अयम् ------------ अस्ति ।

## ३. शुद्धम् उच्चारयत *(शुद्ध उच्चारण गर्नुहोस्)*



औदुम्बरः



अशोकः



आमलकः



प्लक्षः



निम्बः



चम्पकः

## ४. कथाम् पठित्वा सन्देशम् कथयत *(कथा पढी सन्देश बताउनुहोस्)*



एकः धनाधिपनामकः धनिकः आसीत् । तस्य पार्श्वे बहु धनम् आसीत् । देवपत्तने तस्य विशालः प्रासादः आसीत् । तस्य प्रासादस्य समीपे एकः पर्णकुटीरः आसीत् । तत्र एकः अकिञ्चननामकः संन्यासी निवसति स्म । सः भिक्षाटनेन जीवनम् यापयति स्म । धनाधिपः कैलासम् गन्तुम् इच्छति स्म । सः कैलासयात्रायै सामग्रीणाम् सञ्चयम् कुर्वन् आसीत् । सः संन्यासिनम् स्वयोजनाम् श्रावयति स्म । एकदा एकम् कमण्डलुम् एकम् पानपात्रम् च गृहीत्वा संन्यासी स्वकुटीराद् निरगच्छत् । धनाधिपः तम् अपृच्छत्, "कुत्र गच्छसि ?" । सः अकथयत्, "अहम् कैलासम् गच्छामि ।" धनाधिपः अकथयत्, "अहम् कैलासयात्रायै त्रिभिः वर्षैः योजनाम् निर्माय सामग्रीणाम् सञ्चयम् कुर्वन् अस्मि । तव पार्श्वे तु किमपि नास्ति, तथैव गन्तुम् इच्छसि । कथम् सफलः भविष्यसि ?" संन्यासी अकथयत्, 'मम पार्श्वे दृढः सङ्कल्पः अस्ति । अहम् कमण्डलौ भिक्षाम् याचित्वा बुभुक्षाम् शमयामि, पानपात्रे जलम् गृहीत्वा पिपासाम् शमयामि । सङ्कल्पस्य बलेन एव अहम् कैलासम् प्राप्य आगमिष्यामि ।' एवम् कथयित्वा सः कैलासयात्रायै निरगच्छत् । मासानन्तरम् सः कैलासयात्राम् समाप्य प्रत्यागच्छतत् । धनाधिपः कैलासगमनाय दण्डम् क्रीत्वा आगच्छन् आसीत् । संन्यासी तस्मै मानससरोवरस्य जलम् अददात् । सः जलम् गृहीत्वा किमपि अकथयन् प्रासादम् प्राविशत् ।

एउटा धनाधिप नाम गरेको धनी व्यक्ति थियो । ऊसँग धेरै धन थियो । देवपत्तनमा उसको ठुलो दरबार थियो । उसको दरबारको नजिकै एउटा स्याउले छाप्रो थियो । त्यहाँ एक अकिञ्चन नाम गरेका संन्यासी बस्दथे । उनी भिक्षा मागेर जीवनयापन गर्दथे । धनाधिप कैलास जान चाहन्थ्यो । ऊ कैलास यात्राका लागि सामग्री जम्मा गर्दै थियो । ऊ संन्यासीलाई आफ्नो योजना सुनाउँथ्यो ।

एक दिन एउटा कमण्डलु र एउटा गिलास लिएर संन्यासी आफ्नो कुटीबाट निस्किए । धनाधिपले सोध्यो, “कहाँ जान्छौ ?” उनले भने, “म कैलास जान्छु ।” धनाधिपले भन्यो, “म कैलासयात्राका लागि तीन वर्षदेखि योजना बनाएर सामग्री सङ्कलन गर्दैछु । तिमीसँग त केही पनि छैन, त्यसै जान चाहन्छौ । कसरी सफल हुन्छौ ?” संन्यासीले भने, “मसँग दृढ सङ्कल्प छ । म कमण्डलुमा भिक्षा मागेर भोक मेटाउँछु । गिलाँसमा पानी थापेर तिर्खा मेटाउँछु । सङ्कल्पकै बलमा म कैलास पुगेर आउँछु ।” यति भनेर उनी कैलासयात्राका लागि निस्किए । एक महिनापछि उनी कैलास यात्रा सकेर फर्किए । धनाधिप कैलास जानका लागि लौरो किनेर आउँदै थियो । संन्यासीले उसलाई मानसरोवरको जल दिए । ऊ जल लिएर केही नभनी दरबारभित्र पस्यो ।

## ५. पाठम् पठित्वा क्रियाकलापान् कुरुत *(पाठ पढी क्रियाकलापहरू गर्नुहोस्)*





| अयम् पिप्पलः अस्ति । अयम् अहोरात्रम् प्राणवायुम् प्रसारयति । अस्य पत्राणि, फलानि, वल्कलानि च औषधनिर्माणे प्रयुज्यन्ते । हृदयरोगस्य, मधुमेहस्य, उदरसमस्यानाम्, वृक्कसमस्यानाम् च निराकरणाय एतेषाम् प्रयोगः भवति । अतः वयम् पिप्पलम् पूजयामः । | अयम् वटः अस्ति । अयम् अपि प्राणवायुम् प्रसारयति । अस्य पत्रे, फले, निर्यासे च औषधम् भवति । सौन्दर्यस्य वृद्धौ वटः प्रयुज्यते । कफस्य वातस्य च समस्यानाम् अपाकरणाय वटस्य प्रयोगः भवति । अतः वटः पूज्यः वृक्षः अस्ति । |
|---|---|
| यो पिपल हो । यसले अक्सिजन दिन्छ । यसका पात, फल र बोक्राहरू औषधी बनाउन प्रयोग हुन्छ । मुटुरोग, मधुमेह, पेट र मिर्गौलासम्बन्धी समस्याको समाधानका लागि यिनीहरूको प्रयोग हुन्छ । त्यसैले हामी पिपलको पूजा गर्दछौं । | यो वर हो । यो पनि प्राणवायु दिन्छ । यसका पात, फल र चोपमा औषधी हुन्छ । सुन्दरता बढाउन यसको प्रयोग गरिन्छ । कफ र वाथसम्बन्धी समस्या हटाउन वरको प्रयोग हुन्छ । त्यसैले वर पूज्य रुख हो । |





| | |
|---|---|
| अयम् कुशः अस्ति । कुशः पवित्रः वनस्पतिः अस्ति । कुशे कीटाणवः स्थातुम् न शक्नुवन्ति । रक्तचापस्य व्यवस्थापने कुशः उपयोगी भवति । कुशासने वसनेन च रक्तचापः समुचितः भवति । कुशः रक्तरोगान् चर्मरोगान् च अपाकरोति । | अयम् अपामार्गः अस्ति । अयम् अपि पवित्रः वनस्पतिः अस्ति । अयम् दन्तधावने प्रयुज्यते । अयम् दन्तरोगान् अपाकरोति, जम्भपीडाम् मुखदौर्गन्ध्यम् च विनाशयति । अस्य काण्डे, बीजे, पत्रे, मूले च औषधम् भवति । रोगाणाम् विनाशाय एषाम् प्रयोगः भवति । |
| यो कुश हो । कुश पवित्र वनस्पति हो । कुशमा कीटाणुहरू बस्न सक्दैनन् । रक्तचापको व्यवस्थापनमा कुश उपयोगी हुन्छ । कुशासनमा बस्नाले रक्तचाप ठिक हुन्छ । कुशले रगत र छालाका रोगहरू हटाउँछ । | यो दतिउन हो । यो पनि पवित्र वनस्पति हो । यो दाँत माझ्नमा प्रयोग हुन्छ । यसले दाँतका रोग हटाउँछ र गिजाको दुखाइ तथा मुखको दुर्गन्ध नाश गर्दछ । यसको डाँठ, बिउ, पात र जरामा औषधी हुन्छ । विभिन्न रोगहरूको नाशका लागि यिनीहरूको प्रयोग हुन्छ । |

## (क) समुचितोत्तरे (√) चिह्नम् योजयत *(उपयुक्त उत्तरमा (√) चिह्न लगाउनुहोस्)*

(अ) कः अहोरात्रम् प्राणवायुम् प्रसारयति ?

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पिप्पलः | | वटः | | कुशः | | अपामार्गः | |

(आ) कः सौन्दर्यस्य वृद्धौ प्रयुज्यते ?

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पिप्पलः | | वटः | | कुशः | | अपामार्गः | |

(इ) रक्तचापस्य व्यवस्थापने कः उपयोगी भवति ?

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पिप्पलः | | वटः | | कुशः | | अपामार्गः | |

(ई) कः मुखदौर्गन्ध्यम् विनाशयति ?

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पिप्पलः | | वटः | | कुशः | | अपामार्गः | |

(ख) उपयुक्तम् पदम् संस्थाप्य रिक्तस्थानम् पूरयत *(उपयुक्त पद राखी खाली ठाउँ भर्नुहोस्)*

(अ) पिप्पलस्य पत्राणि, फलानि, वल्कलानि च ------------ प्रयुज्यन्ते ।

(आ) वटस्य पत्रे, फले, निर्यासे च ------------ भवति ।

(इ) ------------ रक्तरोगान् चर्मरोगान् च अपाकरोति ।

(ई) अपामार्गस्य ------------, बीजे, पत्रे, मूले च औषधम् भवति ।

(उ) कुशे ------------ स्थातुम् न शक्नुवन्ति ।

(ऊ) कफस्य वातस्य च समस्यानाम् अपाकरणाय ------------ प्रयोगः भवति ।

६. कोष्ठकस्य साहाय्येन रिक्तस्थानम् पूरयत *(कोठाको सहयोगले खाली ठाउँ भर्नुहोस्)*

| | | | | |
|---|---|---|---|---|
| तुलसी | पत्रे | आयुर्वेदे | दोषान् | रुजाम् |
| अङ्गणे | वातावरणम् | क्षवम् | तुलसीजलस्य | दूषितः |





इयम् --------- अस्ति । तुलस्याः ---------, शाखायाम्, बीजे, मूले च औषधम् भवति । --------- तुलस्याः औषधगुणानाम् बहु महत्त्वम् वर्णितम् अस्ति । तुलसी शरीरस्य अन्तः स्थितान् --------- अपाकरोति । तुलसी --------- नाशयति, --------- विनाशयति, रक्तम् शुद्धीकरोति । दीर्घरोगिणः अपि --------- पानम् कुर्वन्ति । तुलसीम् परितः --------- वायुः न आगच्छति । तेन --------- शुद्धम् भवति । तुलस्याः सम्पर्केण वयम् नीरोगिणः भवामः । अतः वयम् गृहस्य --------- तुलस्याः रोपणम् कुर्मः । वयम् देवीरूपेण तुलसीम् पूजयामः ।

यो तुलसी हो । तुलसीको पात, हाँगा, बिउ र जरामा औषधी हुन्छ । आयुर्वेदमा तुलसीका औषधीय गुणहरूको धेरै महत्त्व वर्णन गरिएको छ । तुलसीले शरीरभित्र रहेका दोषहरूको नाश गर्दछ । तुलसीले रुघा हटाउँछ, खोकी नास्दछ र रगतलाई शुद्ध गर्दछ । दीर्घरोगीहरू पनि तुलसीजलको पान गर्दछन् । तुलसीको वरिपरि दूषित वायु आउँदैन । त्यसले वातावरण शुद्ध हुन्छ । तुलसीको सम्पर्कले हामी निरोगी हुन्छौँ । त्यसैले हामी घरको आँगनमा तुलसी रोप्छौँ । हामी तुलसीलाई देवी मानेर पूजा गर्दछौँ ।

## ७. पदम् परिचित्य पृथक्कुरुत *(पद चिनी छुट्याएर लेख्नुहोस्)*

अयम्पिप्पलःअस्ति । → अयम् पिप्पलः अस्ति ।

(क) कुशःपवित्रःअस्ति । → ------------------------------------ ।

(ख) वयम्पिप्पलम्पूजयामः । → ------------------------------------ ।

(ग) अयम्दन्तधावनेप्रयुज्यते । → ------------------------------------ ।

(घ) संन्यासीजलम्अददात् । → ------------------------------------ ।

(ङ) अस्तुतुभ्यम्नमः । → ------------------------------------ ।

(च) अहम्कैलासम्गच्छामि । → ------------------------------------ ।

## ८. कोष्ठकात् उपयुक्तम् शब्दम् विचित्य लिखत *(कोष्ठकबाट सही शब्द छानी लेख्नुहोस्)*

(क)

| कदली | कदलः |
|---|---|



------------



------------

(ख)

| | |
|---|---|
| आम्रः | आम्रम् |

 

------------ ------------

(ग)

| | |
|---|---|
| दाडिमः | दाडिमम् |

 

------------ ------------

(घ)

| | |
|---|---|
| आमलकम् | आमलकः |

 

------------ ------------

(ङ)

| | |
|---|---|
| बिल्वम् | बिल्वः |

 

------------ ------------

९. उदाहरणम् विलोक्य कोष्ठके 'अयम्', 'इयम्' 'इदम्' वा इति लिखत *(उदाहरण हेरी कोठाभित्र 'अयम्', 'इयम्' वा 'इदम्' लेख्नुहोस्)*

  

अयम् बालकः   इयम् बालिका   इदम् फलम्

(क)



------- पिप्पलः



------- शमी



------- बिल्वम्

(ख)



------- कुशः



------- तुलसी



------- आम्रम्

(ग)



------- अपामार्गः



------- दूर्वा



------- पुष्पम्

(घ)



------- पत्रम्



------- शाखा



------- पृत्तम्

## १०. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
| अयम् | दाडिमम् |
| इयम् | वटः |
| इदम् | कदली |

## ११. चित्रम् विलोक्य वर्णयत *(चित्र हेरी वर्णन गर्नुहोस्)*



धरा - पृथ्वी, The Earth
अन्नदा - अन्न दिनेवाली, Grain giver
सरित् - नदी, River
तुभ्यम् - तिमीलाई, To you
मरुत् - हावा, Wind
मेघ - बादल, Cloud
कदलः - केराको बोट, Banana plant
शमी - शमीको रुख, Ficus benjamina
दूर्वा - दुबो, Sacred grass used in sacrifice
दाडिमः - अनारको बोट, Pomegranate plant
बिल्वः - बेलको रुख, The tree of wood apple
आम्रः - आँपको रुख, Mango tree
औदुम्बरः - डुम्री, The tree of bearing edible fruit
अशोकः - अशोकको रुख, The tree of fonesia asoka
आमलकः - अमलाको रुख, Myrobalan
प्लक्षः - पाकरीको रुख, Kind of evergreen tree
निम्बः - निमको रुख, The neem tree
चम्पकः - चाँपको रुख, The tree of michelia
धनिकः - धनी, Rich
प्रासादः - दरबार, Palace
पर्णकुटीरः - स्याउले छाप्रो, Hut made of cut branches
भिक्षाटनेन - भिक्षा मागेर, By begging
श्रावयति - सुनाउँछ, Tells
एकदा - एक दिन, One day
शमयति - शान्त गर्दछ, Make peacefull
निरगच्छत् - निस्कियो, Came out
क्रीत्वा - किनेर, After buying
पिप्पलः - पिपल, Holy big tree
अहोरात्रम् - रातदिन, Day and night
प्राणवायुः - अक्सिजन, Oxygen
वल्कलम् - रुखको बोक्रा, Tree bark
हृदयरोगः - मुटुरोग, Heart disease
मधुमेहः - चिनी रोग, Diabetes
वृक्कम् - मिर्गौला, Kidney
वटः - वरको रुख, The groom's tree
निर्यासः - चोप, Gum
कफः - खकार, Sputum
वातः - वायु, Wind
स्थातुम् - रहन, To stay
समुचितः - सन्तुलित, Balanced
रक्तम् - रगत, Blood
चर्म - छाला, Skin
अपामार्गः - दतिउन, Ceremonial toothbrush used by women in Risipanchami
जम्भः - गिजा, The bases of the teeth
काण्डः - डाँठ, Stalk
रुजा - रुघा, The flu
क्षवः - खोकी, Cough
अङ्गणम् - आँगन, Courtyard
शाखा - हाँगा, Branch
परितः - वरिपरि, Around

# सञ्चारप्रविधिः बाह्यसम्पर्कः च

## द्वाविंशः पाठः

## विज्ञानजगत्

१. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

जानीहि देशस्य सर्वघटनाम् ।
प्रातःकाले पठ पत्रिकाम् ॥





मनोरञ्जने नास्ति निराशा ।
अस्ति मम पार्श्वे चलभाषः ॥



दूरस्थम् वस्तु पश्य तत्क्षणम् ।
आनय मित्र ! दूरवीक्षणम् ॥



दूरदर्शनम् पश्य, स्वयम् चालय ।
पठने चित्तम् पुनः आनय ॥

| |
|---|
| देशका सबै घटना जान, बिहान पत्रिका पढ । मनोरञ्जनमा निराशा हुँदैन, मसँग फोन छ । टाढाका वस्तु तुरुन्तै हेर, साथी ! दुरबिन ल्याऊ । टेलिभिजन हेर, आफैँ चलाऊ अनि फेरि पढाइमा मन लगाऊ । |

८. चित्रम् विलोक्य लुप्तम् अक्षरम् भरत *(चित्र हेरेर छुटेको अक्षर भर्नुहोस्)*



वायु --------- नम्



सङ्ग --------- कम्



घ --------- का

## २. कोष्ठकात् शब्दम् विचित्य रिक्तस्थानम् पूरयत *(कोष्ठकबाट शब्द छानेर खाली ठाउँ भर्नुहोस्)*






| आकाशवाणीम्, सङ्गणकम्, पत्रिकाम्, दूरभाषम् |
|---|

(क) बालकः ------------ चालयति ।

(ख) पिता ------------ पठति ।

(ग) अनुजः ------------ शृणोति ।

(घ) माता ------------ करोति ।

| बालक कम्प्युटर चलाउँछ । बुबा पत्रिका पढ्नुहुन्छ । भाइ समाचार सुन्छ । आमा कुराकानी गर्नुहुन्छ । |
|---|

## ३. चित्रम् विलोक्य पठत *(चित्र हेरी पढ्नुहोस्)*

दूरवीक्षणम्



करदीपः



पिञ्जः



दूरदर्शनम्



## ४. शब्दखण्डान् योजयित्वा समस्तशब्दान् निर्मात *(टुक्रा जोडी सिङ्गो शब्द बनाउनुहोस्)*

दूर + दर्शनम् = ______

दूर + वीक्षणम् = ______

द्वि + चक्रिका = ______

त्रि + चक्रिका = ______

बस + यानम् = ______

यान + चालकः = ______

## ५. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*



पत्रिका



द्वारम्



कर्तरी



चिकित्सकः



द्विचक्रिका

## ६. लयम् अनुसृत्य पठत *(लय हालेर पढ्नुहोस्)*

जानाति विविधाः भाषाः जानाति विविधाः कलाः ।

आत्मानं स न जानाति यो न जानाति संस्कृतम् ॥

थुप्रै भाषाहरू जान्दछ र थुप्रै कलाहरू जान्दछ (भने पनि) त्यसले आफूलाई जान्दैन जसले संस्कृत जान्दैन ।

## ७. अनुच्छेदम् पठित्वा उत्तरयत *(अनुच्छेद पढेर उत्तर दिनुहोस्)*

कुरेशः तिरुवा कालिकोटे निवसति । तस्य पिता कृषकः अस्ति । सः क्षेत्रे कार्यम् करोति । सः कुद्दालेन खनति । सः अन्नम् उत्पादयति । कुरेशस्य गृहे विद्युत् नास्ति । सः रात्रौ दीपस्य प्रकाशे पठति ।

कुरेश तिरुवा कालिकोटमा बस्छन् । उनका पिता किसान हुनुहुन्छ । उहाँ खेतमा काम गर्नुहुन्छ । उहाँ कोदालाले खन्नुहुन्छ । उहाँ अन्न फलाउनुहुन्छ । कुरेशका घरमा बिजुली छैन । उनी राति दियोको उज्यालोमा पढ्छन् ।

## ९. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*

| | |
|---|---|
| विमानम् | सङ्गणकम् |
| सुसाङ्ख्यम् | घटिका |
| घटी | पानीयम् |
| जलम् | वायुयानम् |

| | | |
|---|---|---|
| जानीहि - जान, Know | दूरम् - टाढा, Far | चालय - चलाऊ, Play |
| पत्रिका - पत्रिका, Newspaper | वस्तु - चीज, Object | पुनः - फेरि, Again |
| पठ - पढ, Read | तत्क्षणम् - तत्काल, Immediate | चित्तम् - मन, Mind |
| मम पार्श्वे - मेरो साथमा, With me | दूरवीक्षणम् - दूरबीन, Binocular | आनय - ल्याऊ, Bring |

## त्रयोविंशः पाठः

# स्वागतम्

## १. शिक्षकेण सह वाचयत *(शिक्षकसँगै गाउनुहोस्)*

करोमि अद्य स्वागतम्
सहर्ष-भव्य-स्वागतम्
अयम् महान् महोत्सवः
भवद्भिरेव सम्भवः ।





अहम् समस्तबालकैः
युतः करोमि स्वागतम् ।

सुशिक्षिकाश्च शिक्षकाः
समग्र-मञ्च-वीक्षकाः
वदन्त्यहो निरन्तरम्
सहर्ष भव्य-स्वागतम् ।

आज (तपाईँहरूलाई) सहर्ष भव्य स्वागत गर्छु । यो ठुलो उत्सव हो । यो तपाईँहरूको कारणले भव्य भएको छ । हामी सबै बालक मिलेर स्वागत गर्दछौँ । शिक्षकहरू राम्रो पढाउनुहुन्छ । सबै जना मञ्चमा बसेर हेर्नुहुन्छ । सबै जना निरन्तर भव्य स्वागत भन्नुहुन्छ ।

## २. सलयम् वाचयत *(भाका हालेर वाचन गर्नुहोस्)*

नमन्ति फलिनो वृक्षाः नमन्ति गुणिनो जनाः ।
शुष्कवृक्षाश्च मूर्खाश्च न नमन्ति कदाचन ।

फल लागेका रुखहरू झुक्छन्, गुणवान् व्यक्तिहरू झुक्छन् । सुकेका रुख र मूर्खहरू कहिल्यै झुक्दैनन् ।

## ३. कोष्ठकस्य शब्दानाम् संयोजनेन वाक्यम् *(पूरयत कोष्ठकका शब्द राखेर वाक्य पूरा गर्नुहोस्)*



| |
|---|
| महोत्सवः, मञ्चे, सभा, सभापतिः, कार्यक्रमः |

अद्य विद्यालये ------------ अस्ति । एषा ------------ अस्ति । अतिथिः ------------ तिष्ठति । कार्यक्रमस्य अन्ते ------------ भाषणं करोति । ------------ सुन्दरः भविष्यति ।

| |
|---|
| आज विद्यालयमा महोत्सव छ । यो सभा हो । अतिथि मञ्चमा बस्छन् । कार्यक्रमको अन्त्यमा सभापतिले भाषण गर्छन् । कार्यक्रम सुन्दर हुनेछ । |

## ४. चित्रम् विलोक्य शब्दम् उच्चारयत *(चित्र हेरेर शब्द उच्चारण गर्नुहोस्)*



सूचनापट्टः



पत्रम्



मेला



कक्षा



चिकित्सालयः

५. शब्दानाम् अक्षराणि पृथक्कुरुत *(शब्दहरूको अक्षर छुट्याउनुहोस्)*

पट्टः = प् अ ट् ट् अः

घट्टः = -------------------------------

चित्रम् = च् इ त् र् अ म्

मित्रम् = -------------------------------

कार्यम् = क् आ र् य् अ म्

हार्यम् = -------------------------------

६. परस्परम् मेलयत *(जोडा मिलाउनुहोस्)*



औषधालयः



विद्यालयः



कार्यालयः



न्यायालयः

७. पत्रावरणिकायाः विवरणम् पठित्वा प्रश्नान् उत्तरयत *(खामको विवरण पढी उत्तर दिनुहोस्)*




(क) शङ्करः ------------ अस्ति ?

(अ) काष्ठमण्डपे (आ) नाम्चेबजारग्रामे

(ख) ------------ पत्रं लिखति ?

(अ) सोनमः (आ) सरस्वती

(ग) पत्रम् कुत्र गच्छति ?

(अ) कालीमाटीनगरे (आ) सोलुखुम्बुजनपदे

८. पत्रावरणिकायाम् स्वस्य प्रापकस्या च नामस्थानानि लिखत *(खाममा आफ्नो र प्रापकको नाम तथा ठेगाना लेख्नुहोस्)*



## ९. शब्दान् उच्चार्य उत्तरपुस्तिकायाम् लिखत *(शब्द उच्चारण गरेर कापीमा लेख्नुहोस्)*

काष्ठमण्डपम्



पोखरा



जनकपुरम्



कपिलवस्तु



**करोमि** - गर्छु, I do
**अद्य** - आज, Today
**स्वागतम्** - स्वागत, Welcome
**सहर्ष** - खुसीका साथ, With joy
**भव्यम्** - भव्य, Grand
**महान्** - महान्, Great
**समस्तबालकाः** - सबै बालकहरू, All of the kids
**सम्भवः** - सम्भव, Possible
**समग्रम्** - सब, Entire
**वदन्ति** - भन्दछन्, Say
**निरन्तरम्** - निरन्तर, Frequently
**मञ्चः** - मञ्च, Stage
**वीक्षकाः** - दर्शकहरू, Spectator
**अतिथिः** - पाहुना, Guest
**नमति** - झुक्दछ, Bows
**शुष्कः** - सुकेको, Dry
**कदाचन** - कहिल्यै पनि, Never